श्रीगणेशायनमः कौबेरीति अथोद्धव वाक्यश्रवणानंतरं अपेतः युद्धे ऽभिनिवेशआग्रहोयस्यसः शांतक्रोधइत्यर्थः अतएवसौम्यः प्रसन्नः अतएवकौबे र्याः
दिशोभागः उत्तरायणमित्यर्थः स्त्रियाः पुंवदित्यादिनापुंवद्भावः तमपास्यत्यक्त्वा अगस्त्यस्यायमागस्त्यः तंमार्गमवतीर्णः दक्षिणायनंगतइत्यर्थः उष्णांशुरिवस्थि
तः अनेनहरेः क्रोधः कार्यवशात् आकालमंतस्तंभितोनत्वेकांततोनिवृत्तइतिसूचितं हरिः कृष्णः हरिप्रस्थं इंद्रप्रस्थं प्रतस्थे इंद्रोदुश्च्यवनोहरिरितिहलायुधः
समवप्रविभ्यः स्थइत्यात्मनेपदं देशकालाध्वगंतव्याः कर्मसंज्ञात्यकर्मणामित्यध्वगंतव्यकर्मत्वमितिकेचित् वस्तुतस्तु प्रकृतेप्रपूर्वकस्थाधातोःसकर्म

**कौबेरदिग्भागमपास्यमार्गमागस्त्यमुष्णांशुरिवावतीर्णः अपेतयुद्धाभिनिवेशसौम्योहरिर्हरिप्रस्थमथप्रतस्थे १**

कत्वमंगीकृत्य हरिप्रस्थमित्यत्र कर्तुरीप्सिततममित्यनेनैव कर्मत्वं उत्तरदेशसंयोगानुकूलव्यापारस्यैव धात्वर्थत्वेनविवक्षितत्वात् तथाकर्मत्वांगीकारेतु क्रोश
मास्तइत्यत्रेव क्रोशव्यापकासनानुकूलव्यापारवानितिबोधवद्धरिप्रस्थत्वव्यापकस्थित्यनुकूलव्यापारवानितिलभ्येत तथाप्रकृतेऽविवक्षितत्वादितिदिक् उपमालं १
कारः सर्गेस्मिन्निंद्रोपेंद्रवज्राभिश्रणादुपजातिवृत्तं अनंतरोदीरितलक्ष्मभाजौपादौयदीयावुपजातयस्ताइतिलक्षणात् १ ७ ७

अथास्य प्रस्थानसन्नाहं वर्णयन्नादौ छत्रधारणमाह जगदिति अर्कोजगत्पूज्यं तं हरिमत एव जगत्पवित्रैरपि पादैः किरणैश्चरणैश्च जगंति पुनंतीति जगत्पवित्रा स्तैः स्प्रष्टुं नाप्रयुज्यत नार्हति प्रयुजेर्दैवादिकात्कर्त्तरिलङ् कुतः यतः तस्य हरेः बृहद्विपुलं पार्वणचंद्रचारु पूर्णेंदुसुंदरं इत्युपमालंकारः आतपान्त्रायत इति आतपत्रं छत्रं सु पीतियोगविभागात्कः बिभरांबभूवे बभ्रे भृञः कर्मणिलिट् भीह्रीभृहुवां श्लुवच्चेति विकल्पादाम्प्रत्ययः आतपत्रांतर्हितस्य हर्येरपि पादैः स्प्रष्टुमशक्यत्वादित्यर्थः जगत्पूज्यस्य हरेः पादेन स्पर्शनिषेधादिति भावः २ अथ चामरधारणमाह मृणालेति मृणालसूत्रामलं बिसतंतुविशदं इत्युपमा चलत् वीजनादिति भावः चामरयोर्द्वयं

जगत्पवित्रैरपि तन्न पादैः स्प्रष्टुं जगत्पूज्यमयुज्यतार्कः यतो बृहत्पार्वणचंद्रचारु तस्यातपत्रं बिभरांबभूवे २ मृणालसूत्रा मलमंतरेण स्थितश्चलच्चामरयोर्द्वयं सः भेजे भितः पातुकसिद्धसिंधोरभूतपूर्वां श्रियमंबुराशेः ३ ७ ७ ७

मंतरेण स्थितः द्वयस्य मध्ये स्थित इत्यर्थः अंतरांतरेणयुक्त इति द्वितीया स हरिरभितः पातुका उभयतः पातिनी सिद्धसिंधुराकाशगंगा यस्य सः पर्यभिभ्यां चेति तसि स्प्रत्ययः सर्वोभयार्थवर्तमानाभ्यामिष्यत इत्युभयार्थत्वं रूप्रूरूपेति समासः पातुके तिलषपतेत्यादिना उकञ्प्रत्ययः तस्यांबुराशेः अभूतपूर्वा पूर्वमभूता सुप्सुपे तिसमासः तां श्रियं भेजे तादृशीं शोभां भेजे इत्यर्थः अत एव निदर्शना सा चांबुराशेः संभावनामात्रोक्ता ऽभितः पातुकसिद्धसिंधुसंबंधमूलया ऽसंबंधे संबंधरूपातिशयो क्त्या संकीर्यत इति संक्षेपः ३ ७ ७

अष्टभिः अस्य प्रसाधनं विविधं वर्णयन् आदौ मुकुटमाह चित्रेति अस्य हरेरुपर्यूर्ध्वदेशे मौलिभाजां मुकुटगतानां मणीनां अनणीयसीभिः महतीभिश्चित्राभि रनेकवर्णाभिर्भाभिः कर्त्रीभिः स्युः प्रभा रुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तय इत्यमरः सांतपक्षे भो भगो इत्यादिना रोर्यकारे परे तस्य हलि सर्वेषामिति लोपः अनेकैर्धातुभिः गैरिकादिभिः छुरितानां रूषितानां अश्मनां मणीनां रश्मयो यस्य यद्वा धातुभिः छुरिताः अश्मनां रश्मयो यस्य तस्य गोवर्धनस्याकृतिरन्वकारि अनु

चित्राभिरस्योपरि मौलिभाजां भाभिर्मणीनामनणीयसीभिः अनेकधातुच्छुरिताश्मरश्मेर्गोवर्धनस्याकृतिरन्वकारि ४ तस्योल्लसत्कांचनकुंडलाग्रप्रत्युप्तगारुत्मतरत्नभासा अवापबाल्योचितनीलकंठपिच्छावचूडाकलनामिवोरः ५

कृता तत्सादृश्यमभाजीत्यर्थः पूर्ण्पमेयं ४ कुंडले च धृते इत्याह तस्येति तस्य हरेरुरो वक्षः उल्लसंत्याः कांचनकुंडलयोः प्रत्युप्तानां खचितानां गारुत्मतरत्नानां मरकतमणीनां भासा दीप्त्या उरसि प्रसरंत्येति भावः बाल्यं शैशवं ब्राह्मणादित्वात्ष्यञ् प्रत्ययः तत्रोचितमभ्यस्तं यन्नीलकंठपिच्छं मयूरबर्हं अभ्यस्ते प्युचितं न्याय्यमिति यादवः पिच्छबर्हे नपुंसकमित्यमरः तदेवावचूडा मालिका तस्या आकलनामामोचानमवापेवेत्युत्प्रेक्षा यत्रान्यधर्मसंबंधादन्य देवोपतर्कितं प्राकृतेहि भवेत्साज्ञा स्तामुत्प्रेक्षां प्रचक्षते ५

तमंगदे इति तं हरिं मंदरकूटकोटिव्याघट्टनामंदराचलशिखराग्रसंघर्षणं सैवोत्तेजनाशाणोल्लेखनातयाबंहीयसाबहुतरेणप्रियस्थिरेत्यादिनाबहुलशब्दस्येयसु
निबंहादेशः मणीनांदीप्तिवितानकेन प्रभापटलेनोल्लसंती देदीप्यमाने आच्छीनद्योर्नु मितिनुमागमः अंगदे केयूरे केयूरमंगदंतुल्यमित्यमरः चकासयामास
तुः शोभयांचक्रतुः अंगदेचधृतवानित्यर्थः चकासेर्ण्यंतात्लिटि आंप्रत्यये ऽस्तेरनुप्रयोगः अत्रांगदयोः प्राग्भावीयांगदभेदेप्यभेदोक्तिमपेक्ष्यतयोर्मंदरकूट

तमंगदे मंदरकूटकोटिव्याघट्टनोत्तेजनयामणीनां बंहीयसादीप्तिवितानकेनचकासयामासतुरुल्लसंती ६
निसर्गरक्तेवलयावनद्धताम्राश्मरश्मिच्छुरितैर्नखाग्रैः व्यद्योतताद्यापिसुरारिवक्षोविक्षोभजासृक्स्नपितैरिवासौ ७

कोट्यसंबंधेपिसंबंधोक्त्याह्योरतिशयोक्त्योः संकरः ६ निसर्गेति असौ हरिः निसर्गरक्तैः स्वभावलोहितैः किंच वलये कटके कटकंवलयोस्त्रियामित्यमरः
तयोरवनद्धानां प्रत्युप्तानां ताम्राश्मनां पद्मरागाणां रश्मिभिश्छुरितैः रूषितैः अत एवाद्यापि सुरारेर्हिरण्यकशिपोर्वक्षसो विक्षोभेण विदारणेन जातं यदसृक्तेना
सृजास्नपितैः सिक्तैरिवस्थितैरित्युत्प्रेक्षा स्नातेर्ण्यंतात्क्तः अर्तिन्हीत्यादिनापुगागमः मितांन्हस्वः नखाग्रैर्व्यद्योतत व्यद्योतिष्ट कटकेचधृतवानित्यर्थः ७

उभाविति तमालवन्नीलं आमुक्ते आसंजिते मुक्तालते मौक्तिकसरो यस्मिन् तदस्य हरेर्वक्षः आकाशगंगायाः पयसः उभौ प्रवाहौ व्योम्नि पृथक्पतेतां यदि प्रव
हेतां चेत् संभावनायां लिङ् तेन व्योम्ना उपमीयेत समीक्रियेत नास्योपमानं किंचित् पश्याम इति भावः मुक्ताहारं धृतवानित्यर्थः अत्र व्योम्नि गंगाप्रवाहद्वयासंबं
धेपि संभावनया संबंधकथनादतिशयोक्तिः तदेतत्पुष्पं प्रवालोपहितं यदि स्यादित्यादिवत्तस्यालंकारसर्वस्वकारः स्पष्टीचकार ८ तेनेति तेन हरिणा दीधिति
भिर्दीपिता आशा दिशो येन सः दिगंतविश्रांततेजा इत्यर्थः पयोधेरंभसां सारस्य विकारः सारमयो मणिः समुद्रमंथनोत्थः कौस्तुभाख्य इत्यर्थः दध्रे धृतः धृञ्धारणे

उभौ यदि व्योम्नि पृथक्प्रवाहावाकाशगंगापयसः पतेतां तेनोपमीयेत तमालनीलमामुक्तमुक्तालतमस्य वक्षः ८ तेनांभसां सारम
यः पयोधेर्दध्रे मणिर्दीधितिदीपिताशः अंतर्वसन्बिंबगतस्तदंगे साक्षादिवालक्ष्यत यत्र लोकः ९ मुक्तामयं सारसनावलंबि भाति स्म
दामाप्रपदीनमस्य अंगुष्ठनिष्ठ्यूतमिवोर्ध्वमुच्चैस्त्रिस्रोतसः संततधारमंभः १०

कर्मणि लिट् यत्र मणौ बिंबगतः प्रतिबिंबगतः लोको बाह्यप्रपंचः तदंगे तस्य ह
रेः शरीरे साक्षात् साक्षाद्भूतः बहिः प्रत्यक्षेण लक्ष्यमाण इत्यर्थः अंतर्वसन् अंतर्गत इवालक्ष्यत यत्र मणौ प्रतिबिंबितो बाह्यलोकस्तदंग एवेनैर्मल्यात् बहिः प्रतिफलितः
कुक्षिस्थलोक इवालक्ष्यतेत्यर्थः ९ मुक्तेति अस्य मुक्तामयं मुक्ताप्रचुरं तत्प्रकृतवचने मयट् सारसने कटिसूत्रे अवलंबत इति सारसनावलंबि क्लीबे सारसनं दामपुंस्कट्यां
शृंखलं त्रिष्वित्यमरः आप्रपदं प्राप्नोतीति आप्रपदीनं पादाग्रलंबि आप्रपदं प्राप्नोतीति खप्रत्ययः दाम मुक्तासरः अंगुष्ठेन निष्ठ्यूतं विसृष्टमित्यर्थः गौणार्थत्वादग्राम्यत्वं यथा

हृदंडी निष्क्यूतोऽद्गीर्णवांतादिर्गौणवृत्तिव्यपाश्रयं भतिसुंदरमन्यत्र ग्राम्यकक्षांविगाहत इति ऊर्ध्वंऊर्ध्वप्रवाहंउच्चैरुन्नतंत्रिस्रोतसोमंदाकिन्याः संततधारमविच्छि
न्नसंपातमंभइवभातिस्मेत्युत्प्रेक्षा १० सइति इंद्रनीलस्यस्थलमिवनीलमूर्त्तिः श्यामांगः संहितायांरोरी तिरेफलोपः ढ्रलोपेपूर्वस्यदीर्घइतिदीर्घः कर्चूरंह
रितालमिवपिशंगंवासोयस्यसः पीतांबरइत्यर्थः हरितालंतुकर्चूरमितिवैजयंती सहरिः विसृत्वरैर्विसृमरैः विसृत्वरोविसृमरः प्रसारीचविसारिणीत्यमरः
इण्नशजिसर्तिभ्यइतिक्वरप् अंबुरुहांअंबुजानांकिंप्रजोभिः परागैश्चित्रश्चित्रवर्णोयमस्वसुर्यमुनायाः उदकस्यभारः पूरः उदभारः सइवरराज मंथौदनेत्यादिना

सइंद्रनीलस्थलनीलमूर्तीरराजकर्चूरपिशंगवासाः विसृत्वरैरंबुरुहांरजोभिर्यमस्वसुश्चित्रइवोदभारः ११
प्रसाधितस्याथमधुद्विषोभूदन्यैवलक्ष्मीरितियुक्तमेतत् वपुष्यशेषेऽखिललोककांताऽसानन्यकांताह्युरसीतरातु १२

विकल्पादुदकशब्दस्योदादेशः ११ प्रसाधितस्येति अथप्रसाधितस्यालंकृतस्यमधुद्विषोहरेरन्यैवासदृशीविभिन्नाच अन्यौविभिन्नासदृशावितिवैजयंती ल
क्ष्मीः शोभापद्माच शोभासंपत्तिपद्मासुलक्ष्मीः श्रीरितिगम्यतइतिविश्वः अभूदित्येतन्नयुक्तं कुतः हि यस्मात्साप्रसाधनश्रीः अशेषेवपुषिवसतीतिशेषः किं
च अखिललोकस्य कांताप्रिया इतरातुनित्याउरसीवसतीतिशेषः किंच अन्यस्यकांतानभवतीत्यनन्यकांता किंतुतस्यैवेत्यर्थः अत्रहरेः प्रसाधनादसाधारणी
शोभासमजायतेतिपारमार्थिकोवाक्यार्थः अत्रलक्ष्मीशब्देनश्लेषमहिम्नावाच्यायाः शोभायाः प्रतीयमानयाश्रियादेव्यासहाभेदाध्यवसायादियमन्यैवलक्ष्मी
रित्यभेदेभेदरूपातिशयोक्तिः १२ ७

अथैनमेवार्थं भंग्यंतरेणाह कपाटेति कपाटवत् विस्तीर्णे मनोरमे चोरः स्थले स्थिता श्रीरिति ललनाकांता यस्य तस्य हरेरानंदिताशेषजनास सर्वांगसंगि
नी अत एवापरैव असाधारण्येव श्रीदेव्या अन्यैव लक्ष्मी शोभा रमा च बभूव स एवालंकारः प्रायेणैकार्थमप्यनेकं श्लोक सुक्तिविशेषलाभाल्लिखंतिक
वयः यथाह नैषधे आदावेव निपीयेत्यादि श्लोकद्वयं तथा स्वकेलिलेशेत्यादि श्लोकद्वयं चेत्यादि १३ अथ देवी सहचरस्यैवास्य यात्रेति सूचयन् प्रसा



कपाटविस्तीर्णमनोरमोरः स्थलः स्थितश्रीललनस्य तस्य आनंदिताशेषजना बभूव सर्वांगसंगिन्यपरेव लक्ष्मीः १३
दैत्याधिपप्राणमुषां नखानामुपेयुषां भूषणतां क्षतेन प्रकाशकार्कश्यगुणौ दधानास्तनौ तरुण्यः परिवव्रुरेनम् १४

धनविधेः फलमाह दैत्येति भूषणतामुपेयुषा न तु महारतामिति भावः दैत्याधिपस्य हिरण्यकशिपोः प्राणमुषां प्राणहारिणां वज्रादपि कठोराणामित्यर्थः नखानां
क्षतेन व्रणेन प्रकाशो व्यक्तः कार्कश्यमेव गुणो ययोस्तौ स्तनौ स्तनानित्यर्थः जातावेकवचने भासे जाति भूयस्त्वात् स्तनादिषु जातेर्द्वित्वात् द्विर्वचनं यथाह वामनः स्तनादीनां द्वित्वा
विष्टाजातिः प्राणेयेति दधानास्तरुण्यो युवतयः वयसि प्रथमे इति ङीप् एनं हरिं परिवव्रुः वेष्टयामासुः अत्र हरिनखानां नरहरिनखभेदेप्यभेदोक्त्या स्तनयोश्च तादृक्काठिन्यासं
बंधेपि संबंधोक्त्या चातिशयोक्तिः तयोः सापेक्षत्वात् संकरः १४ ७

आकर्षतेति अभ्युन्नतत्वाद्धेतोः ऊर्ध्वमाकर्षतेवनतंमध्यसुन्नमयतेवस्थितेनेत्यर्थः सेक्षा अतिगुरुत्वमति भारत्वमति महत्त्वंच भजतीतितद्भाक् भजोण्विः ते नांगनानांकुचमंडलेनातिकृशीयानत्यंतंकृशतरः तनीयानक्षीणश्च रकृतोह्लादेर्उ घोरितिरेफादेशः मध्योनितांतमाक्रांतः पीडितइवननामनतः प्रणतश्च अत्रमध्यकुचमंडलयोर्विशेषणसाम्याद्दरिविजिगीषुराजप्रतीतेः समासोक्तिः नथाच वाच्ययोः प्रतीयमानाभेदेनाक्रमणक्रियाकर्मकर्तृभावसंभावनया नुप्राणितेयमध्यस्याक्रमणहेतुत्वोत्प्रेक्षेत्यनयोः संकरः उत्प्रेक्षयोरत्र नैरपेक्ष्यात्संसृष्टिरिवेतिविवेकः १५ यांयामिति प्रियोहरिर्यांयामंगनांनितरांवीक्षा यांद्विर्भावः एकपदंचैतत् प्रैक्षत सासा पूर्ववद्द्विर्भावः कातराक्षी साध्वसाच्चकितलोचना सतीह्रियानम्रमुखीबभूव अनेन कार्यद्वारा लज्जासाध्वसभावोदयउक्तः

आकर्षतेवोर्ध्वमतिकृशीयानभ्युन्नतत्वात्कुचमंडलेन नम्नाममध्योतिगुरुत्वभाजा नितांतमाक्रांतइवांगनानाम् १५
यांयांप्रियः प्रैक्षतकातराक्षीसासाह्रियानम्रमुखीबभूव निःशंकमन्याः सममाहितेर्ष्यास्तत्रांतरेजघ्नुरमुंकटाक्षैः १६

परंतु स्वशब्दोपादानात् नात्यंतंचमत्कारी अन्यासामीर्ष्याभावोदयमाह अन्या अनवेक्षितांगनाः आहितेर्ष्याः कृतासमाः सत्यः परोत्कर्षासहि ष्णुत्वमीर्ष्यास्यादितिलक्षणं तत्रांतरे तस्मिन्वीक्षितावसरे अंतरं क्लीबेमध्येवकाशेचनादर्थेवसरे ऽवधाविति वैजयंती निःशंकंतदवीक्षणादेवविश्वासंसमंयु गपत् कटाक्षैरमुंहरिंजघ्नुः प्रजह्रुः सरोषमद्राक्षुरित्यर्थः १६

७ ७ ७

अथ पंचभिरस्य दिव्यास्त्रसन्निधानमाह तस्येति अतसीसूनेन क्षुमाकुसुमेन समानभासस्तुल्यकांतेः स्निग्धश्यामस्येत्यर्थः अतसी स्यादुमा क्षुमेत्यमरः तस्य हरेरेकबाहुः भ्राम्यदावर्त्तमानं मयूखावलीनां मंडलं चक्रवालं यस्य तेन चक्रेण सुदर्शनेन स्फुरन्महानावर्त्तोऽंभसो भ्रमो यस्य सः स्यादावर्त्तोंऽभसां भ्रम इत्यमरः यमुनाजलानामोघः पूर इव रेजे चक्रं दधावित्यर्थः १७ विरोधिनामिति विरोधिनां सर्वचारिणां विग्रहभेदे शरीरविदारणे दक्षा शरीरं वर्ष्म विग्रह इत्यमरः क्वचित् क्वापि अस्खलंती सर्वत्राप्रतिहतवृत्तिरित्यर्थः नित्यं सन्निहिता ऽनपायिनी अत एव मूर्त्ता मूर्त्तिमती शक्तिः सामर्थ्यमिव स्थिता इत्युत्प्रेक्षा कौमोदकी तस्य हरेः

तस्यातसीसूनसमानभासो भ्राम्यन्मयूखावलिमंडलेन चक्रेण रेजे यमुनाजलौघः स्फुरन्महावर्त्त इवैकबाहुः १७ विरोधिनां विग्रहभेददक्षा मूर्त्तेव शक्तिः क्वचिदस्खलंती नित्यं हरेः सन्निहिता निकामं कौमोदकी मोदयति स्म चेतः १८ न केवलं यः स्वतयासुरारेरनन्यसाधारणतां दधानः अत्यर्थमुद्वेजयिता परेषां नाम्नापि तस्यैव स नंदकोऽभूत् १९

चेतो निकामं मोदयति स्म स्वसन्निधानेनेति भावः १८ नेति अन्यस्य साधारणः समस्तजनसाधारणो न भवतीत्यनन्यसाधारणः तस्य भावस्तत्ता तां दधानः तथापि यो नंदकः स्वतया केवलं गजाश्वादिवत्साधारणत्वेनैव वस्तुत्वेनैव सुरारेर्मुररिपुसंबंधी न किंतु परेषां शत्रूणां अत्यंतमुद्वेजयिता भीषयिता सन् अत एव नाम्नापि चंद्रादिवन्नंदयतीति नंदक इत्यन्वर्थसंज्ञाबलेनापि तदीयत्वेनेति यावत् तस्यैव हरेरेव तदीय एव योऽनन्यसाधारणत्वात्परोद्वेजकत्वात्तस्यैव नंदको नंदयिता चेत्यर्थः स नंदको नंदकाख्यः खड्गोऽभूत्सन्निहितोऽभूदित्यर्थः संबंधानुवादेन सन्निधानमेवात्र विधेयं प्रकरणात् अत्रा

न्यसाधारणत्वपरोद्देजकत्वपदार्थाभ्यां विशेषणगत्यानंदकस्य तदीयतासमर्थनात्सदार्थहेतुकं काव्यलिंगमलंकारः १९ नेति अन्येन पुरुषांतरेण नतिमाकर्षणं विभेदेन स्वानुकूल्यं च न नीतं न प्रापितं क्रियासु रणकर्मसु हिताहित कृत्येषु न कर्णांतिकं कर्णगोचरं मासोगुणो मौर्वी आप्तता धर्मश्च यस्य तद्विधेयं क्रियासु वशंगतं द्रढीयो दृढतरं पीडासहतरमिति यावत् शृंगस्य विकारः शार्ङ्गं नाम धनुः मित्रमिवास्य हरेरंतिकस्थं सन्निहितमभवत् २० प्रवृद्धेति धियं रातीति धीरो मनोहरः मंद्रो गंभीरोंबुदस्येव धीरोनादः प्रवृद्धो यस्य सः प्रवृद्धमंद्रांबुदधीरनाद इत्युपमा कृष्णा एवार्णवस्तस्याभ्यर्णं चरोंतिकचारी उपकंठांतिकाभ्यर्णाभ्यग्राअप्यभितोव्यय

नं नीतमन्येन नतिं कदाचित्कर्णांतिकं मास गुणां क्रियासु। विधेयमस्याभवदंतिकस्थं शार्ङ्गं धनुर्मित्रमिव द्रढीयः॥२०॥
प्रवृद्धमंद्रांबुदधीरनादः कृष्णार्णवाभ्यर्णचरैकहंसः। मंदानिलापूररुतं दधानो निध्वानमश्रूयत पांचजन्यः॥२१॥

मित्यमरः सचासावेकहंसश्चेति श्लिष्टपरंपरितरूपकं मंदानिलस्यापूर आपूरणं तेन रुतं जनितं निध्वानं दधानः अनाध्मानोपि मंदमारुतप्रवेशादेव ध्वनन्निति पाठवातिशयोक्तिः ध्वन्यसंबंधेपि संबंधकथनात् पंचजनो नाम कश्चिदसुरस्तत्र भवः पांचजन्यः स्वशंखः बहिर्देवपंचजनेभ्यश्चेति वक्तव्यमिति यञ्प्रत्ययः अश्रूयत श्रूयतेस्म पांचजन्योपि सन्निहितोभूदित्यर्थः वीणाः श्रूयंते पुष्पाण्याघ्रायंत इत्यादिवत् धर्मधर्मिणोरभेदोपचारात् पांचजन्यस्य श्रवणोक्तिः २१ ७ ७

रराजेति महान्रथोयस्यसमहारथोरथिकविशेषः महारथस्यलक्षणं आत्मानंसारथिनंचाश्वान्रक्षन् युध्येतयोनरः समहारथसंज्ञःस्यादित्याहुर्नीति कोविदाइतिरथांगंचक्रमस्यास्तीतिरथांगी हरिरिष्टसिद्धेः संपादकःलक्ष्यणयत्वात्पुष्यः सर्वार्थसाधकइतिशास्त्राच्चेतिभावः सर्वासुदिक्षुप्रतिषिद्धमा र्गअनिषिद्धमार्गमित्यर्थः अधिष्ठानशक्तेर्निरंकुशत्वात् पुष्यो हस्तोमैत्रमप्याश्विनंच चत्वार्याहुः सर्वदिग्वारकाणीतिशास्त्रादितिभावः क्षिप्रंक्षि प्रगामिनंअन्यत्रक्षिप्रंक्षिप्रकारिणं क्षिप्रंचाश्विदिनेपुपुष्यमितिशास्त्रात्पुष्यरथंक्रीडारथंअसौपुष्यरथश्चक्रियानंनसमराययदित्यमरः अधि

रराजसंपादकमिष्टसिद्धेःसर्वासुदिक्ष्वप्रतिषिद्धमार्गं महारथःपुष्यरथंरथांगीक्षिप्रंक्षपानाथइवाधिरूढः२२
ध्वजाग्रधामादहशेथशौरेःसंक्रांतमूर्तिर्मणिमेदिनीषु फणावतस्त्रासयितुंरसायास्तलंविविक्षन्निवपन्नगारिः२३

रूढः सन्पुष्योरथइववत्तंपुष्यरथमधिरूढःपुष्यनक्षत्रंगतःक्षपानाथश्चंद्रइववरराज २२ ध्वजेति अथरथारोहणानंतरंशौरेः कृष्णस्यध्वजाग्रंधामस्थानंय स्यसःमणिमेदिनीषुकुट्टिमेषुसंक्रांतमूर्तिः प्रतिबिंबितांगःसन् पन्नगारिर्गरुत्मान्फणावतःसर्पान्त्रासयितुंभीषयितुंरसायाः तलंपातालंविविक्षन् वेष्टुंप्रवेष्टुमि च्छन्निवेत्युत्प्रेक्षाविशतेःसन्नंतात्लुङ्शत्रादेशश्चददृशेदृष्टः सोपिसन्निहितोभूदित्यर्थःअथवारसातलान्नागकुलानिजित्वाप्रोर्ध्वंप्रयास्यन्निवपन्नगारि रितिपाठः२३

यियासतइतियातुमिच्छतोयियासतः यातेः सन्नंताल्लुटः शत्रादेशः तस्यहरेः संबंधी महींधरंतीतिमहीध्राः पर्वताः मूलविभुजादित्वात्कप्रत्ययइत्याह वामनः महीध्राद्योमूलविभुजादिदर्शनादिति तेषांरंध्राणिबिलानितेषांभिदाभेदनं षड्भिदादिभ्योङ् भिदायांपटीयान्समर्थतरः पटहप्रणादोनिस्साणघोषः महार्णवस्यौघः प्रवाहः अन्यानिजलानिजलांतराणीवसुप्सुपेतिसमासः अन्यान्शब्दान्शब्दांतराणिपूर्ववत्समासः अंतरयांचकारआच्छादयामासेत्यर्थः अंतरशब्दादंतर्धानार्थात्तत्करोतीतिण्यंताल्लुड् अंतरमवकाशावधिपरिधानांतर्द्धिभेदतादर्थ्येइत्युभयत्राप्यमरः २४ यतइति जगतांभर्त्ताधारयिताकुक्षिस्थाखिललोकः

यियासतस्तस्यमहीध्रंध्रभिदापटीयान् पटहप्रणादः जलांतराणीवमहाजलौघःशब्दांतराण्यंतरयांचकार २४
यतःसभर्त्ताजगतांजगामधर्त्र्याधरित्र्याःफणिनाततोऽधः महाभराभुग्नशिरःसहस्रसाहाय्यकव्यग्रभुजंमसस्रे २५

कर्तृकर्मणोः कृतीतिकर्मणिषष्ठी सहरिर्यतोयेनभूमार्गेण जगामततः तस्मिन्भूमार्गेअधः पातालेधरित्र्याधरिण्याः धर्त्र्याधारयित्रा पूर्ववत् षष्ठी फणिनाशेषेण महताभरेणासमंतात्भुग्नस्यकुब्जीभूतस्यशिरः सहस्रस्यसाहाय्यकेसहायकर्मणि योवधाकुरूपोत्तमाहुञ् व्यग्रास्त्वरमाणाभुजाः यस्मिन्यथातथामसस्रेमस्रतं भावेलिड् हरिश्चचालेत्यर्थः अत्रशेषस्यविशिष्टप्रसरणासंबंधेपिसंबंधोक्तेरतिशयोक्तिः २५ ७ ७ ७

अयेति अथहरिचलनानंतरं उच्चकैरुन्नते तोरणेद्वारिदारुणिसंगेनभंगः तस्माद्भयेनावनम्रीकृतानिकेतनानियेस्तानिसैन्यानि सोमस्यान्वयः संतानः तंसोमा न्वयंतंहरींस्फूनीतिभाजंसुष्ठुनीतिमंतंक्रियाः सामाद्युपायप्रयोगास्तासां फलानिहिरण्यभूमिपात्रादिलाभाइव अन्वयुः अन्वगच्छन् यातेर्लङ् २६ श्यामे- ति श्यामानिचतान्यरुणानिचतैः श्यामारुणैः कृष्णलोहितैः वर्णोवर्णेनेतिसमासः वारणदानतोयैर्गजमदोदकैराल्लोडिताः संमेलिताः अतएवशितिकंठपिच्छ

अथोच्चकैस्तोरणसंगभंगभयावनम्रीकृतकेतनानि क्रियाफलानीवस्फूनीतिभाजंसैन्यानिसोमान्वयमन्वयुस्तं २६
श्यामारुणैर्वारणदानतोयैरालोडिताः कांचनभूपरागाः आनेमिमग्नैः शितिकंठपिच्छक्षोदद्युतश्चुक्षुदिरेरथौघैः २७

क्षोदाः मयूरबर्हचूर्णाइवद्योतंतइतितथोक्ताः क्विप्उपमालंकारः कांचनस्यकांचनीवाभूस्तस्याः परागाः पांसवः आनेमिप्त्य आनेमिप्रधिपर्यंतं चक्रधारा प्रधिर्नेमिरित्यमरः आङ् मर्यादाभिविध्योरित्यभिविधावव्ययीभावः मग्नैरथौघैः चुक्षुदिरे पिष्टाइत्यर्थः परागाणांविशिष्टपेषणासंबंधेपिसंबंधोक्तेरतिश योक्तिः तथाचमहतीगजरथसंपत्तिर्व्यज्यतइत्यलंकारेणवस्तुध्वनिः २७ ७ ७ ७

नेति अष्टसु लोहादिषु पदं प्रतिष्ठास्येत्ति अष्टापदं सुवर्णं रुक्मं कार्तस्वरं जांबूनदमष्टापदोस्त्रियामिति सुवर्णपर्यायेष्वमरः तस्य भूमिस्तस्याः रेणुः कांचनभूरजः पा
दाहतो रथाश्वादिचरणताडितोपि सन्नित्यर्थः महाजनानां बहुजनतानां पूज्यानां च शिरांसि न लंघयामास नाक्रमति स्म किं बहुना उद्धूतिमुत्सतनं दर्पं च नैवाजगाम
कुतः यद्यस्मात् गरिम्णो गुरुत्वगुणस्य माहात्म्यस्य च प्रियस्थिरेत्यादिना गुरोर्गरादेशः सदृशमनुरूपं यथा तथा अचेष्टत अचलत व्यवहरच्च गुरुत्वस्योद्धूत्सप्र
तिबंधकत्वादिति भावः अत्रानौद्धत्य इत्यादिप्रस्तुतसुवर्णपरागविशेषणसाम्यादप्रस्तुतसुजनप्रतीतेः समासोक्तिरलंकारः २८ निरुध्येति तुरगः यदुभिरा

न लंघयामास महाजनानां शिरांसि नैवोद्धतिमाजगाम अचेष्टताष्टापदभूमिरेणुः पादाहतोयत्सदृशं गरिम्णः २८
निरुध्यमाना यदुभिः कथंचिन्मुहुर्यदुच्चिक्षिपुरग्रपादान् ध्रुवं गुरून्मार्गरुधः करींद्रान्नुल्लंघ्य गंतुं तुरगास्तदीषुः २९

रूढैरिति भावः कथंचिदति प्रयत्नेन निरुध्यमाना बलादाकर्षणेन वार्यमाणा अपि यद्यस्माद्वाजिनस्ते पादाश्चतान् अग्रपादान् हस्ताभ्यामग्रहस्तादयोर्गुणगु
णिनोर्भेदाभेदाभ्यामिति वामनसूत्रात् समानाधिकरणसमासः मुहुरुच्चिक्षिपुरुत्क्षिप्तवंतः तत्तस्मान्मार्गं रुधंतीति मार्गरुधः मंदगमनेन मार्गरोधिनः क्षिप्र गुरू
न्महतः पूज्यांश्च अलंघ्यानपीति भावः करींद्रानुलंघ्य गंतुमीषुरिच्छंति स्म ध्रुवमुत्सुकेषु गुरवोपि सन्मार्गप्रतिरोधकाः परैरुल्लंघ्यंत इत्यलंकारेण वस्तुध्वनिः २९

अवेक्षितानिति आयता आकृष्टा वल्गा मुखरज्जुर्यस्मिन्कर्मणि तद्यथा तथा यत्नेन दुर्वारवेगत्वात् अतिप्रयत्नेन निरुद्धा वाहा वाजिनो यैस्तैः वाजिवाहार्वगंधर्वहयसैं-
धवसप्तय इत्यमरः तुरंगिभिरश्वसादिभिरग्रे पुरोदेशे अवेक्षितानालोकितान्रेणुभिः प्रक्रीडंतीति प्रक्रीडिताः तान् पांसुक्रीडाकरान् पांसुर्ना न द्वयो रज इत्यमरः कर्त्तरि क्तः पृथु-
कान् शिशून् पोतः पाकोऽर्भको डिंभः पृथुकः शावकः शिशुरित्यमरः जनन्यः तूर्णमेत्य पथिभ्यो निन्युः अपसारयांचक्रुः इति स्वभावोक्तिः ३० दिदृक्षेति अनघं अकल्मषं
मुरारिं दिदृक्षमाणाः द्रष्टुमिच्छंतः दृशेः सन्नंतात् लटः शानजादेशः ज्ञाश्रुस्मृदृशां सन इत्यात्मनेपदं जनौघाः रथ्यायां रथ्यायां प्रतिरथ्यं यथार्थेऽव्ययीभावः आरात् समीपं आ-

अवेक्षितानायतवल्गमग्रे तुरंगिभिर्यत्ननिरुद्धवाहैः प्रक्रीडितान्रेणुभिरेत्य तूर्णं निन्युर्जनन्यः पृथुकान्पथिभ्यः ३० दिदृक्षमाणाः प्रतिरथ्य-
मीयुर्मुरारिमारादनघं जनौघाः अनेकशः संस्तुतमप्यनल्पा नवं नवं प्रीतिरहो करोति ३१

रात् दूरसमीपयोरित्यमरः ईयुराजग्मुः इणो लिट् दीर्घ इणः
कितीत्यभ्यासदीर्घः ननु नित्यपरिचिते का दिदृक्षेत्यत्राह अनेकश इति बहुवारमित्यर्थः बह्वल्पार्थात् शस्कारकादन्यतरस्यामिति शस्प्रत्ययः संस्तुतं परिचितमपि वस्तु
जनौघा इति शेषः संस्तवः स्यात्परिचय इत्यमरः अनल्पा अधिका प्रीतिः प्रेम कर्तृ नवं नवं आभीक्ष्ण्येन नवं करोति नित्यवीप्सयोरिति नित्यार्थे द्विर्भावः अहो शब्दः पुराण-
स्यापि नूतनत्वमित्याश्चर्ये परमप्रेमास्पदं वस्तु नित्यं दृष्टमपि अदृष्टचरमिव प्रतिक्षणं दिदृक्षंत इत्यर्थः भगवान्पि तथैवेति सामान्येन विशेषसमर्थनरूपो-
र्थांतरन्यासः ३१

उपेयुषइति विद्वानभिज्ञः अतएवतस्यांपुरिनगर्य्यांदत्तचक्षुः निस्पृष्टदृष्टिः असौहरिर्निरंतराभिर्नीरंध्राभिरनीकिनीभिः निरुच्छ्वासमेतिसंकटं वर्त्मउपेयुषः प्राप्तस्यरथस्य शनैर्यातंसंबाधेनमंदगमनं नविदामासनविवेद उषविद्जागृभ्योन्यतरस्यामित्याम्प्रत्ययः व्यासंगादसंवेदनंनत्वज्ञानादितिभावः व्यासंगस्यपदार्थत्वात्पदार्थहेतुकं काव्यलिंगमलंकारः ३२ अथएकत्रिंशात्श्लोकैर्द्वारकांवर्णयति मध्यइति समुद्रस्यमध्येमध्येसमुद्रं पारेमध्येषष्ठ्यावेतिविकल्पादव्ययीभावः मध्येशब्दस्यतत्सन्नियोगादेकारांतत्वं कांचनवप्रभासाहेमप्राकारप्रभयाककुभोदिशः पिशंगीः पिशंगवर्णाः गौरादित्वात्ङीष्कुर्वतीयापूः जलंसमुद्रोदकंभित्वाउत्थितेतिशेषः तुरगकां

उपेयुषोवर्त्मनिरंतराभिरसौनिरुच्छ्वासमनीकिनीभिः रथस्यतस्यांपुरिदत्तचक्षुर्विद्वान्नविदामासशनैर्नयातं ३२
मध्येसमुद्रंककुभःपिशंगीर्याकुर्वतीकांचनवप्रभासा तुरंगकांतामुखहव्यवाहज्वालेवभित्वाजलमुल्ललास ३३

तायाः वडवायाः मुखेहव्यंवहतीतिहव्यवाहोऽग्निः कर्मण्यणित्यण्प्रत्ययः तस्यवाडवाग्नेर्ज्वालेवोल्ललासउद्बभासे अत्रसमुद्रांतर्लीनायांवडवानलज्वालायांकदाचित्संभाव्यमानस्यमध्योल्लसनस्यपुरीदर्शनाभेदाध्यवसायेनास्याज्वालात्वमुत्प्रेक्ष्यते इवशब्दोयमुत्प्रेक्षाव्यंजकएवनोपमायांइष्टज्वालायाअप्रतिसिद्धत्वेनोपमानत्वायोगात् मन्येशंकेध्रुवंनूनंप्रायइत्येवमादिभिःउत्प्रेक्षाव्यज्यतेशब्दैरिवशब्दोपितादृशइत्याचार्योदंडी ३३ ७

कृतास्पदेति भूमिभृतांराज्ञांगिरीणांचसहस्रैः कृतास्पदा कृताधिष्ठाना आस्पदंप्रतिष्ठायामितिनिपातः उदकमस्यास्तीतिउदन्वानुदधीः उदन्वानुदधौचेतिनिपात
नात्साधुः तस्यांभसापरिवीतापरिवेष्टितामूर्तिः स्वरूपंयस्याः सापृथ्वीपृथुः वोतोगुणवचनादितिङीष् एवंभूतायाभूः नर्निर्विद्यतेनखिद्यतइत्यनिर्वित् विदेःसत्तार्थान्नि
पूर्वात्सत्सूद्विषेत्यादिनाक्विप् तेनअनिर्विदाअखिन्नेन अन्यथाशिल्पसौष्ठवासिद्धेरितिभावः विधात्राप्रयतइति पृथिवीभूः पृथेःषिवन् औणादिकः षिद्गौरादि

कृतास्पदाभूमिभृतांसहस्रैरुदन्वदंभःपरिवीतमूर्तिः अनिर्विदायाविदधेविधात्रा पृथ्वीपृथिव्याःप्रतियातनेव ३४
त्वष्टुःसदाभ्यासगृहीतशिल्पविज्ञानसंपत्प्रसरस्यसीमा अदृश्यतादर्शतलामलेषुछायेवयास्वर्जलधेर्जलेषु ३५

भ्यश्चेतिङीष् तस्याःप्रतियातनाप्रतिकृतिर्विदधेविहिताप्रतियातनाप्रतिछायाप्रतिकृतिरित्यमरः ध्रुवःप्रतिनिधित्वोत्प्रेक्षयापुरोवैविन्ध्यविस्तारादिवस्तुव्यज्यते ३४ त्व
ष्टुरिति त्वष्टुर्विश्वकर्मणः सदाभ्यासेनगृहीतोलब्धोयः शिल्पविज्ञानस्यविद्यायाःसंपदःप्रसरःप्रकर्षः तस्यसीमाऽवधिःप्रतिमेतियावत् यापूरादर्शतलामलेषुदर्पणपृ
ष्ठवत्स्वच्छेषु दर्पणेमुकुरादर्शावित्यमरः जलधेर्जलेषु स्वःस्वर्गस्य स्वरव्ययंस्वर्गलोकइत्यमरः छायाप्रतिबिंबमिवादृश्यतेत्युत्प्रेक्षाछायात्वनातपेकांतौप्रतिबिंबार्कजाययो
रितिवैजयंती ३५

रथांगेति अंबुधिः पितेव वराय श्रेष्ठाय जामात्रेन वरो जामातरि श्रेष्ठेन्यवदिति विश्वः रथांगभर्त्रे चक्रधराय हरये अभिनवं यथा तथा प्रतिपादितायाः
अंकः समीप उत्संगः श्यतद्भाजः अंकः समीप उत्संगे चिन्हे स्थानापराधयोरिति केशवः यस्याः पुरः उपकंठं अंतिके अत्यंतसंयोगे द्वितीया अन्यत्र
कंठे विभक्त्यर्थेव्ययीभावः मुहुः प्रेम्णा रत्नावलीराबबंधामुमोच श्लेषानुप्राणिते यमुपमेति संकरः ३६ यस्य इति चलंती ना वारिधेर्वारिवीचीनां छटा

रथांगभर्त्रेऽभिनवं वराय यस्याः पितेव प्रतिपादितायाः प्रेम्णोपकंठं मुहुरंकभाजो रत्नावलीरंबुधिराबबंध ३६
यस्याश्चलद्वारिधिवारिवीचिच्छटोच्छलच्छंखकुलाकुलेन वप्रेण पर्यंतचरोडुचक्रः सुमेरुवप्रोन्वहमन्वकारि ३७

सूपरंपरासु उच्चलद्भिः उत्पतद्भिः शंखानां कुलैराकुलेन संकीर्णेन यस्याः पुरः वप्रेण प्राकारेण पर्यंतचरमुडुचक्रं समीपवर्तिनक्षत्रमंडलं यस्य सः सुमेरोः वप्रः सा
नुः सानुप्राकारयोर्वप्र इत्युभयत्रापि सज्जनः अहन्यहन्यन्वहं अव्ययंविभक्तीत्यादिना यथार्थेव्ययीभावः अनश्च नपुंसकादन्यतरस्यामिति समासांतः अन्वका
रि अनुकृतः तत्साम्यं प्राप्तोवप्र इत्यर्थः मेरूपमानाद्वप्रस्य तत्तुल्यमौन्नत्यं व्यज्यते ३७ ७ ७ ७ ७

वणिक्पथइति यत्रयस्यांपुरि वणिजांपथि वणिक्पथे आपणे अपूगाः पूगाइवसंपद्यमानानि कृतानि पूगकृतानि पुंजीकृतानि श्रेण्यादयः कृतादिभिरितिसमा
सः श्रेण्यादिषुच्व्यर्थमितिच्व्यर्थता अलोलद्युतिभांजिस्थिरप्रभावंति रत्नानि लोलैश्चलैः अतएवभ्रमागतैः जननिर्गममार्गगतैः भ्रमाश्ववजलनिर्गमाइ
त्यमरः अंबुभिर्मुष्णन् अपहरन् अंबुराशिरर्णवः जलमात्रसारोपीतिभावः रत्नाकरनामवाप नतुमार्गितिभावः अंबुराशेःमाकृरत्नसंबंधेपिअसंबंधोक्तेरतिशयोक्तिःन

वणिक्पथे पूगकृतानि यत्र भ्रमागतैरंबुभिरंबुराशिः लोलैरलोलद्युतिभांजि मुष्णन् रत्नानि रत्नाकरतामवाप ३८
अंभश्च्युतः कोमलरत्नराशीनपांनिधिः फेनपिनद्धभासः यत्रातपे दातुमिवोपतल्पं विस्तारयामास तरंगहस्तैः ३९

थापुर्याः समुद्रातिशायिनी रत्नसमृद्धिर्वस्तु व्यज्यते इत्यालंकारेणवस्तुध्वनिः ३८ अंभइति यत्रपुरि अपांनिधिः समुद्रः अंभश्च्योतंतिक्षरंतीत्यंभश्च्युतोजलस्राविणः अतएवफेनैः पिन
द्धभासः पिहितकांतीन् अपिपूर्वान्नह्यतेः कर्मणिक्तः वष्टिभागुरिरल्लोपमवाप्योरुपसर्गयोरित्यपेरकारलोपः कोमलाननुल्बणान् रत्नराशीनातपे दातुंशोषणार्थं निधातुमिवेति फलोत्प्रे
क्षा तल्पेषट्टकेषु अधितल्पं तल्पंशय्याट्टदारेष्विइत्यमरः विभक्त्यर्थेव्ययीभावः तरंगैरेवहस्तैः विस्तारयामास प्रसारितवान् अत्रातपेदानस्यतरंगहस्तसाध्यत्वेनोत्प्रेक्षारूपकयोःसं
करः ३९

यच्छालमिति सागरस्यमहोर्मिभिः कर्तृभिः यच्छालंयस्याः प्राकारं प्राकारोवरणः शालोवप्रइत्यमरः उत्तुंगतयाउन्नतत्वेनगुणेनविजेतुंजेतुमिवेत्यर्थः फलोत्प्रेक्षेयंव्यं
जकाप्रयोगात्गम्या दूरात्उदस्थीयतउत्थितं भावेलुङ् अभ्याशागतेः समीपनिकटाभ्याशसन्निकृष्टसनीडवदित्यमरः व्याहतोवांछितार्थः शालविजयरूपोयेषांतैः
विजयाक्षमैरित्यर्थः अतएवव्रीडादिवेतिहेतूत्प्रेक्षा ऊर्मिभिर्विलिल्ये विलीनं विलीयतेर्भावेलिट् अत्राशक्तस्याप्यविजिगीषोः व्रीडानुदयात् पूर्वोक्तशक्तरूपार्थसापे

यच्छालमुत्तुंगतयाविजेतुंदूरादुदस्थीयतसागरस्य महोर्मिभिर्व्याहतवांछितार्थैर्व्रीडादिवाभ्याशगतैर्विलिल्ये ४०
कुतूहलेनेवजवादुपेत्यप्राकारभित्त्यासहसानिषिद्धः रसन्नरोदीद्भृशमंबुवर्षव्याजेनयस्याबहिरंबुवाहः ४१

क्षत्वेनोत्प्रेक्षयोः संकरः ४० कुतूहलेनेति अंबूनिवहतीइति अंबुवाहोमेघः कर्मण्यण् कुतूहलेनेवांतः प्रवेशकौतुकेनेवेतिहेतूत्प्रेक्षा जवादुपेत्ययस्याः प्राका
रभित्त्यासहसानिषिद्धोनिवारितः अतएवबहिरेवरसन्गर्जन्दुःखाक्रंदन्निवेतिश्लेषः अंबुवर्षव्याजेनभृशंअरोदीत् अश्रूणिमुक्तवान् रुदिर् अश्रुविमोचनेलुङ्
रुदश्चपंचभ्यइतिईडागमः अत्रांबुवर्षव्याजपदेनापन्हवस्योक्तश्लेषोत्प्रेक्षासापेक्षत्वात्संकरः ४१

यदंगेति यस्यांपुरि अंगनानांरूपंसौंदर्यं आकारोवा रूपंस्वभावः सौंदर्यमाकारश्लेषयोरपीतिविश्वः तस्य सरूपतायाः सारूप्यात् भेदकंव्यावर्तकं किंचिद्गु
णंधर्ममीप्सुतीभिरपेक्ष्यमाणाभिः आढ्यीनयोर्नुमितिविकल्पान्नुम्भावः अप्सरोभिराराधितः प्रार्थितोमनुः मानुषसृष्टिकर्तास्वाः स्वकीयाः प्रजाः निमेषः पक्ष्मपा
तएवचिन्हंव्यावर्तकंतेनसहवर्ततइति सनिमेषचिन्हाः तेनसहेतुल्ययोगइतिबहुव्रीहिः चक्रे अद्यानतमित्युत्प्रेक्षा तत्लेतद्यांजसाद्ययोरित्यमरः अत्रस्वाभाविक
निमेषस्यापह्नरः प्रार्थनाहेतुकत्वोत्प्रेक्षयाह्वारकांगनानांनिमेषमात्रभिन्नममानुषंसौंदर्यंव्यज्यते ४२ स्फुरदिति यस्यांपुरिक्षणदासुरात्रिषुनार्यः स्फुर

यदंगनारूपसरूपतायाः किंचिद्गुणंभेदकमिच्छतीभिः आराधितोद्धामनुरप्सरोभिश्चक्रे प्रजाः स्वाः सनिमेषचिन्हाः ४२
स्फुरत्तुषारांशुमरीचिजालैर्विनिन्हुताः स्फाटिकसौधपंक्तीः आरुह्य नार्यः क्षणदासु यस्यां नभोगतादेव्यइवव्यराजन् ४३

द्भिस्तुषारांशोश्चंद्रस्यमरीचीजालैश्चंद्रिकाभिर्विनिन्हुताः तदेकरूपतापत्तेः अगृह्यमाणाविविच्यअज्ञायमानाइत्यर्थः अतएव सामान्यालंकारः सामान्यगु
णसाम्येनयत्र वस्त्वंतरैकतेतिलक्षणात् स्फाटिकानांस्फटिकविकाराणांसौधानांपंक्तीरारुह्य नभोगतादेव्योदेवांगनाइव देवशब्दस्यपचादिषुचिचेट्टिडिति
पागत् टिड्डाणञेत्यादिनाङीप् व्यराजन्सौधानामग्रारोहणात् अप्यंकषत्वाच्च तत्रलक्ष्यमाणाः स्त्रियः खेचर्यइवरेजुरित्यर्थः अत्रनभोगतत्वोत्प्रेक्षायाः पू
र्वोक्तसामान्यसापेक्षत्वात्संकरः ४३

कांतेंद्विति यस्यांपुरिक्षपासुरान्निषु प्रतिक्षपं विभक्त्यर्थेव्ययीभावः कांतानिरम्याणि इंदुकांतोपलानांचंद्रकांतमणीनांकुट्टिमानि बद्धभूमयो येषु तेषु कुट्टिमं
बद्धभूमिः स्यादिति हलायुधः कुट्टिमोस्त्रीनिबद्धाभूरित्यमरः हर्म्यतलेषुउच्चैरुन्नताः प्रणाल्योजलमार्गाः द्वयोः प्रणालीपयसः पदव्यामित्यमरः अधः पाति
नोध श्वराः पयोमुचोमेघाः यस्यांताः अधः कृतमेघमंडलत्वात् अतीतदृष्टिपाताअपीत्यर्थः विरोधालंकारः पयसांसमूहंपूरमूहुर्वहंतिस्म चंद्रकांतनिष्यंदेरि
तिभावः वहेर्लिट् वचिस्वपीत्यादिना संप्रसारणं अत्रसौधानांप्रणालीनांचतादृशौन्नत्यंपयःपूरासंबंधेपिसंबंधोक्त्यातिशयोक्तिः ४४ रताविति यत्रपुरिगृहेष्व

कांतेंदुकांतोपलकुट्टिमेषुप्रतिक्षपंहर्म्यतलेषुयस्याम् उच्चैरधःपातिपयोमुचोपिसमूहमूहुः पयसांप्रणाल्यः ४४
रतौह्रियायत्रनिशाम्यदीपान्जालागताभ्योधिगृहंगृहिण्यः बिभ्युर्बिडालेक्षणभीषणाभ्योवैदूर्यकुड्येषुशशीद्युतिभ्यः ४५

धिगृहं विभक्त्यर्थेव्ययीभावः गृहिण्यः कुलांगनाः अतएवरतौरतिकालेह्रियादीपान्निशाम्यनिर्वाप्य शमेर्मित्वात् ह्रस्वादेशाभावश्चिंत्यः जालागताभ्योगवाक्षमार्गप्रति
ष्ठाभ्यः जालंगवाक्षआनायइतिविश्वः विदूरात्प्रभवंतीतिवैदूर्याणिबालवायजमणयः वैदूर्यंबालवायजइत्यमरः विदूराञ्ञ्यइतिञ्यप्रत्ययः अत्रविदूरशब्दोबालवायस्यादेशः प
र्यायोवातत्रोपचरितोवा तेनबालवायात्गिरेरसौप्रभवति नविदूरान्नगरात् तत्रतुसंस्क्रियतइति तदुक्तं बालवायोविदूरंचप्रकृत्यंतरमेवच नवैतत्रेतिचब्रूयाज्जित्वरीवदुपाचरदि
ति तेषांकुड्येषुभित्तिषुसंक्रांताभ्यइतिशेषः अतएवतच्छायापत्त्यापिंगत्वात्बिडालेक्षणवत् भीषयंतिइतिभीषणाभ्योभयंकराभ्यः नंद्यादित्वात्कर्तरिल्युट् तस्ययेनाप् शशि

द्युतिभ्यः बिभ्युः भीता मौग्ध्यादितिभावः अत्रलज्जावारणायदीपनिर्वापणेनकेवलंतदसिद्धेः मस्कृतभयंचोत्पन्नमितिअनर्थोत्पत्तिरूपोविषमप्रभेदः विरुद्धकार्यस्योत्पत्तिर्यत्रानर्थस्यवाभवेत् विरूपघटनायास्याद्विषमालंकृतिर्मतेतिलक्षणात् ४५ यस्यामिति यस्यांपुरिगृहेष्वतिश्लक्ष्णतयारत्नभित्तीनामतिस्निग्धतयाआलेख्यंचित्रंविधातुंनिर्मातुंअशक्नुवंतोयुवानः प्रतिबिंबितांगाः स्वयंतासुसंक्रांतमूर्तयः संतोरत्नभित्तीः सजीवचित्राः सचेतनचित्रवतीरिवचक्रुरितिउत्प्रेक्षा ४६ सा

यस्यामतिश्लक्ष्णतयागृहेषुविधातुमालेख्यमशक्नुवंतः चक्रुर्युवानः प्रतिबिंबितांगाः सजीवचित्राइवरत्नभित्तीः ४६

सावर्ण्यभाजांप्रतिमागतानांलक्ष्यैःस्मरापांडुतयांगनानां यस्यांकपोलैःकलधौतधामस्तंभेषुभेजेमणिदर्पणश्रीः ४७

वर्ण्येति यस्यांपुरिकलधौतधामस्तंभेषुहेमागारस्तंभेषु कलधौतंरूप्यहेम्नोरितिविश्वः प्रतिमागतानां सावर्ण्यभाजां तत्सावर्ण्यादगृहीतभेदानामित्यर्थः अतएवसामान्यालंकारः सामान्यंगुणसाम्येनयत्रवस्त्वंतरैकतेतिलक्षणात् अंगनानांस्मरापांडुतयालक्ष्यैर्विभिन्नवर्णत्वात् भेदेनगृह्यमाणैरित्यर्थः कपोलैः मणिदर्पणानांस्फटिकमुकुराणांश्रीरिवश्रीर्भेजे प्राप्ता इतिनिदर्शना साचोक्तसामान्यप्रसादलब्धेतितेनास्याःसंकरः ४७ ७

शक्रांगेति यस्यांपुरिमुग्धांगनाः शक्रांगवन्नीलाउपलामणयः मरकतानीत्यर्थः उपलःप्रस्तरेमणाविति वैजयंती तैर्निर्मितानां गृहाणांदेहल्यः गृहद्वारशाखाधारदारूणि गृहावग्रहणी देहलीत्यमरः तासांभासालिंदेषु अलिंदेषु अंगणेषु द्वारबहिर्भागेषु प्रघाणप्रघणालिंदाबहिर्द्वारप्रकोष्ठक इत्यमरः गोःपुरीषंगोमयं गोश्चपुरीषमितिमयट् तस्यगोमुखानिविलेपनानि गोमुखंकुटिलागारेवाद्यभांडेविलेपने इतिविश्वः नवांकुरेव मरकतप्रभायांविलेपनभ्रांत्येतिभावः अतएव भ्रांतिमदलंकारः कविसंमतसादृश्याद्वस्त्वंतरमतिर्यत्र सभ्रांतिमानिति सर्वस्वकारलक्षणात् ४८ गोपानसीष्विति यत्रपुरिगृहाणिगोपानसीषुवलभीछादनाधारेषुवंशपंजरेष्वित्यर्थः अतएव

शक्रांगनीलोपलनिर्मितानांलिंदेषुभासागृहदेहलीनां यस्यामलिंदेषुनवांकुरेवमुग्धांगनागोमयगोमुखानि ४८
गोपानसीषुक्षणमास्थितानामालंबिभिश्चंद्रकिणांकलापैः हरिन्मणिश्यामतृणाभिरामैर्गृहाणिनीध्रैरिवयत्ररेजुः ४९

गोपानसीतु वलभीछादने वक्रदारुणि इत्यत्रपटलाधारवंशपंजर इत्याहस्वामी क्षणमीषत्कालं अत्यंतसंयोगेद्वितीया आस्थितानामासीनानांचंद्रकामेचकाः संतियेषामिति समौचंद्रकमेचकावित्यमरः तद्वतांचंद्रकिणांमयूराणांआलंबिभिर्लंबमानैःकलापैः बर्हैः कलापोभूषणेबर्हेइत्यमरः हरिन्मणयोमरकतानि गारुत्मतंमरकतमश्मगर्भहरिन्मणिरित्यमरः तद्वच्छ्यामैस्तृणैरभिरामाणि हरिततृणमयानीत्यर्थः तैर्नीध्रैः पटलप्रांतैरिवरेजुः वलीकनीध्रेपटलप्रांतेथपटलंछदिरित्यमरः छादनपर्यायोपटलछदीतदंचवलवाचिनीवलीकनीध्रेछदेराधारोवंशपंजरोगोपानसीतिविवेकः अत्रहरिततृणालंबनादिगुणक्रियानिमित्तानीध्रैरिवेतिजातस्वरूपोत्प्रेक्षा ४९ ७ ७ ७

रहीदिति याप्यूः गृहत्सस्तलाउपरिस्थाप्यदार्वाधारभूतानिस्तंभपीठानियेषांतैः तथाप्यतुलैः तद्रहितैरितिविरोधः अनुपमैरितिपरिहारः तुलासाम्येस्तंभपीठेइत्युभय त्रापिवैजयंती वितानानामुल्लोचानांमालाभिः पिनद्धैराच्छादितैरप्यवितानैः तद्रहितैरितिविरोधः अशून्यैरित्यविरोधः समस्तवस्तुसमृद्धैरित्यर्थः अस्त्रीवितानमुल्लो चोवितानंत्रिषुतुच्छकमित्युभयत्राप्यमरः विचित्रैरालेख्यरहितैरपिसचित्रैस्तत्सहितैरितिविरोधः विचित्रैरद्भुतैरितिपरिहारः आश्चर्यालेख्ययोश्चित्रमित्युभयत्राप्य मरः विगताः शालाभद्राणियेषांतानिविशालानि शालागृहेतरुस्कंधे शालागारैकदेशयोरितिविश्वः तैर्विशालैरपिभूरिशालैर्बहुभद्रैरितिविरोधः विशालैःपृथुभिरित्य

बृहत्तुलैरप्यतुलैर्वितानमालापिनद्धैरपिचावितानैः रेजेविचित्रैरपियासचित्रैर्गृहैर्विशालैरपिभूरिशालैः ५० चिक्रंसयाकृत्रिम
पत्रिपंक्तेः कपोतपालीषुनिकेतनानां मार्जारमप्यायतनिश्चलांगंयस्यांजनः कृत्रिममेवमेने ५१

विरोधः विशालंपृथुलंमहदित्यमरः वेःशा लच्छंकटचाविति शालच्प्रत्ययः गृहैः रेजे अपिरयंसर्वत्रविरोधेविरुद्धवदाभासाद्विरोधोभासोलंकारः विरोधःसोऽविरोधेपिविरुद्धत्वेनयद्वच इति काव्यप्रकाशेलक्षणा त् ५० चिक्रंसयेति यस्यांपुरिनिकेतनानांवेश्मनां वेश्मसद्मनिकेतनमित्यमरः कपोतान्पक्षिणः पालयंतीतिकपोतपाल्योविटंकापरनामानः स्तंभाग्रप्रसारिताः दारुविशेषाः क पोतपालिकायांतुविटंकंपुंनपुंसकमित्यमरः कर्मणिङीप् तासुकृत्रिमपक्षिणांदारुमयपक्षिणांपंक्तेः कर्मणिषष्ठी चिक्रंसया क्रमितुमिच्छया जिघृक्षयेत्यर्थः क्रमेः सन्नंतादप्रत्य यादित्यकारप्रत्ययेटाप् स्नुक्रमोरनात्मनेपदनिमित्त इतीडागमोनभवति अत्र क्रमेर्वृत्त्यादिव्यतिरिक्तार्थेष्वनुपसर्गाद्वेतिवैकल्पिकस्यात्मनेपदनिमित्तस्यानुपसर्गत्वस्यैवविवक्षि

कस्यसंभवा द्वायतमानतंवानिश्चलमंगंयस्यतं मार्जारंबिडालमपि ओतुर्बिडालोमार्जारइत्यमरः जनः कृत्रिमंक्रिययानिर्वृत्तमेवमेने नतुवास्तवमित्यर्थः ड्वितः क्त्रिः क्त्रेर्मम्नि
त्यमितिमम्प्रत्ययः अनेनकृत्रिमाकृत्रिमभेदोदुर्ग्रह इतिशिल्पज्ञानातिशयोक्तिः अत्रकविकल्पितसादृश्यान्मार्जारजनयोः कृत्रिमाकृत्रिमेषुविपरीतमतिवर्णनात्भ्रां-
तिमदलंकारः ५१ क्षितीति यस्यांपुरिवधूजनः क्षितौप्रतिष्ठायस्यसक्षितिप्रतिष्ठोपिचंद्रं दिविस्थि तमितिभावः तत्रापिसुरेखेरे वारविंदैरधश्चकारेतिविरोधः स्वलावण्य
महिम्नातिरश्चकारअधरीचकारेतिपरिहाराद्विरोधालंकारः अतीतानिनक्षत्रपथमितिअतीतनक्षत्रपथानिअत्यादयः क्रांताद्यर्थेद्वितीययेतिसमासः द्विगुःप्राप्तापन्नेत्यादिना

क्षितिप्रतिष्ठोपिसुरवारविंदैर्वधूजनश्चंद्रमधश्चकार अतीतनक्षत्रपथानियत्रप्रासादशृंगाणिवृथाध्यरुक्षत् ५२ रम्याइति
प्राप्तवतीःपताकारागंविविक्ताइतिवर्धयंतीः यस्यामसेवंतनमद्वलीकाःसमंवधूभिर्वलभीर्युवानः ५३

परवल्लिंगताप्रतिषेधः प्रासादशृंगा
णिवृथाध्यरुक्षत् अधिरोहनिस्म अनधिरुह्यैवाधःकरणादितिभावः रोहतेर्लुङ् शलइगुपधादनिटःक्सइतिक्सादेशः अत्राधःकरणवाक्यार्थस्यश्लेषाविरोधात्तसुपजी
व्यवैयर्थ्येहेतुत्वात्तत्संकीर्णःकाव्यलिंगभेदः ५२ रम्याइति यस्यांपुरियुवानोरम्यारमणीयाइतिहेतोःपताकाःप्राप्तवतीः उत्क्षिप्तध्वजाइत्यर्थः अन्यत्ररम्याइत्येवंपताकाः
प्राप्तवतीः प्रसिद्धिंगताइत्यर्थः पताकावैजयंत्यांचसौभाग्ये ऽकेंध्वजेपिचइतिहेतौप्रकरणेप्रकारादिसमामिषित्युभयत्रापिविश्वः विविक्ताःविजनाः विमलाइतिहेतोःरागंवर्धयं
तीः विविक्तौपूतविजनाविित्युभयत्राप्यमरः नमद्वलीकाःनमन्नीध्राः वलीकनीध्रेपटलइत्यमरः अन्यत्रनमंत्योवल्यःस्त्रीवल्यारव्यामध्यरेखाःयासांताःनमद्वलीकाःन

द्युतश्चेतिकप्रत्ययः त्रिवलिर्मध्यरेखोर्मिर्जीर्णत्वक्कुड्यहृदारुषितिवैजयंती वलभीः कूटागाराणि कूटागारंतुवलभीत्यमरः वधूभिः सममसेवंत वधूसहिताअसेवंतेत्यर्थः अत्रवधूनांवलभीनांच प्रकृतानामेवसाधर्म्येणोपमायागम्यत्वात्केवलप्रकृतगोचरातुल्ययोगितानश्लेषः तत्रकेवलप्रभेदेविशेष्यस्यापिश्लिष्टत्वनियमात् यथाहुः प्रकृताप्रकृतोभयमुक्तंचेच्छब्दमात्रसाधर्म्यं श्लेषोयंश्लिष्टत्वंसर्वत्राद्येतथानांत्यइतिप्रस्तुतानांतथान्येषांकेवलंतुल्यधर्मतः औपम्यंगम्यते यत्रसामतातुल्ययोगिता ५३ सुगंधितामिति यत्रपुरिनप्रतियत्नः संस्कारः पूर्वोयस्यास्तामप्रतियत्नपूर्वामकृत्रिमां स्वाभाविकीमित्यर्थः प्रतियत्नस्तुसंस्कारइतिवैजयंती शोभनोगंधोयेषांतेषां

सुगंधितामप्रतियत्नपूर्वांबिभ्रंतियत्रप्रमदायपुंसां मधूनिवक्त्राणिचकामिनीनामामोदकर्मव्यतिहारमीषुः ५५

भावस्तत्तानां सुगंधितांसौरभ्यं गंधस्येत्वेतत्प्रत्ययः बिभ्रंतिबिभ्राणानि वानपुंसकस्येतिनुमागमः मधूनिमद्यानिकामिनीनांवक्त्राणिचपुंसांप्रमदायप्रीत्यै आमोदकर्मणोवासनाधानस्यव्यतिहारंपरस्परकरणमीषुः अन्योन्यगंधेनान्योन्यवासनामीषुरित्यर्थः इणोलिट् अत्रापिमधूनांवक्त्राणांचप्रकृतत्वात्तत्पूर्वकएवतुल्ययोगिताभेदः तेनयूनांमधुवासितवधूवदनपानंवदनवासितगंडूषमधुपानंचव्यज्यते एतेननिरातंकभोगाः पौराइतिगम्यते ५५

रतांतेति यत्रपुरिगृहांतरेषु वितर्दयो विहारवेदिकाः स्याद्वितर्दिस्तु वेदिकेत्यमरः तासां निर्व्यूहा मत्तवारणाख्या उपाश्रयाः निर्व्यूहो मत्तवारण इति वैजयंती तेषां विटंकाः
उपरितन्यः कपोतपालिकाः तएव नीडानि कुलायानि यस्य सः कपोतपालिकायां तु विटंकं पुंनपुंसकमित्यमरः कुलायो नीडमस्त्रियामित्यमरः वयसां शुकसारिकादि
पक्षिणां गणः वयः पक्षिणि बाल्यादाविति विश्वः अंगनानां वितर्दिषु रममाणानामिति भावः रतांतरे सुरतमध्ये रुतानि रतिकूजितानि शृण्वन् अंते समीपे वसतीत्यंते
वासी शिष्यः छात्रांतेवासिनौ शिष्याविति अमरः शयवासवासिषु कालादित्यलुक् तस्य भावः तत्त्वं आप समीपे मतिशब्देन यथाश्रुतमुच्चारणादेव मुत्प्रेक्षते अत एव स्फुट

रतांतरे यत्र गृहांतरेषु वितर्दिनिर्व्यूहविटंकनीडः रुतानि शृण्वन्वयसां गणोंऽतेवासित्वमाप स्फुटमंगनानां ५५ छन्नेष्वपि स्पष्ट
तरेषु यत्र स्वच्छानि नारीकुचमंडलेषु आकाशसाम्यं दधुरंबराणि न नामतः केवलमर्थतोपि ५६

मिति व्यंजकप्रयोगः ५५ छन्नेष्विति यत्र पुरि
छन्नेषु आच्छादितेषु अपि वादांते इत्यादिना वैकल्पिको निपातः स्पष्टतरेषु स्फुटतरं लक्ष्यमाणेष्वित्यर्थः नारीकुचमंडलेषु स्वच्छानि स्फटिकादिवदतिरोधायकानि अंबराणि वस्त्रा
णि केवलं नामतो अंबरमिति नाम्नैव आकाशसाम्यं न दधुः अंबरं वाससि व्योम्नीति विश्वः किंतु अर्थतोपि अर्थक्रियया अपि तत्साम्यं दधुरित्यर्थः स्वयमतिसूक्ष्मत्वाद्द्रव्य
वधायकत्वं दृष्ट्यादेर्मूर्तांतरगत्यविघातकत्वमित्यादिना साम्यं दधुरित्यर्थः उपमालंकारः ५६

श्रीगजाननप्रसन्नोस्तु

यस्यामिति यस्यांपुरि अजिम्हाः अवक्राः अन्यत्राकपटाः दंभादिरहिताइत्यर्थः आचरेत्सदृशींवृत्तिमजिम्हामशठांतथेतिस्मरणादितिभावः जिम्हंकपटवक्रयो रितिविश्वः महतींसीमानंराजकल्पितक्षेत्रमानमर्यादांकुलगतानुष्ठानस्थितिंवात्यजंतः अपंकाः अकर्दमाः निष्पापाश्च पंकः कर्दमपापयोरितिविश्वः अतिमा त्रा आयतिरायामः उत्तरकालश्चयेषांते अत्यायतयः आयतिस्तूत्तरेकालेसंयमायामयोरपीतिविश्वः द्वयेद्विरूपाः अपि प्रथमचरमतयेत्यादिनाजसिविभा

यस्यामजिह्मामहतीमपंकाः सीमानमत्यायतयोऽत्यजंतः
जनेऽस्जातस्खलनैर्नजातुद्वयेप्यमुच्यंतविनीतमार्गाः ५७

षासर्वनामसंज्ञा विनीतमार्गाः सुविरचिताः पुरवीथयः सुष्ठ्वाचरणपद्धतयश्च अजातंस्खलनं पाषाणादिप्रतिघातोविरुद्धाचरणंच येषांतैर्जनैर्जातुक दाचिदपिनामुच्यंतनत्यक्ताः नकदाचित्स्खलीकृताइत्यर्थः अत्रमार्गशब्दस्यसाधर्म्यादेकनालावलंबिफलद्वयवदेकशब्देनार्थद्वयप्रतीतेः द्वयानामपिमार्गा णांप्रकृतत्वाच्चकेवलप्रकृतविषयोर्थश्लेषः विशेषस्यापिश्लिष्टत्वान्नतुल्ययोगिता ५७ ७ ७ ७

परस्परेति यत्रपुरिपरस्परस्पर्धीन्यहमहमिकयान्योन्यसंघर्षीणि परार्ध्यानिश्रेष्ठानिरूपाणिसौंदर्याणियासांताः रूपंस्वभावेसौंदर्यइतिविश्वः पुरेभवाःपौर्य्यस्ताः स्त्रियः स्त्रियाःपुंवदित्यादिनापुंवद्भावः विधायनिर्मायवेधाःस्रष्टाश्रियोलक्ष्मीदेव्यानिर्मित्यानिर्माणेनयत् प्रासंघुणेनवज्रकीटेनक्षतस्योपमयासाम्येन वाच्यमपवादः तदलमत्यंतं तदेवमलमितिकश्चित् ममार्ज्ज घुणाक्षरवत्याहच्छिकमिदंश्रीरेवतासौंदर्यशिल्पंनकौशलमित्ययशःक्षालितवानित्यर्थः अनन्यासातिशयोक्त्यापौरस्त्रीणांरमासमानसौंदर्यंव्यज्यते ५८ क्षुण्णमिति यदंतःकरणेनक्षुण्णमभ्यस्तं ममेदंभूयादितिभूयोभूयःसंकल्पितमित्यर्थः कल्पयंति

परस्परस्पर्धिपरार्ध्यरूपाःपौरस्त्रियोयत्रविधायवेधाः श्रीनिर्मितिप्रासघुणाक्षतेकवर्णोपमावाच्यमलंममार्ज्ज ५८
क्षुण्णंयदंतःकरणेनवृक्षाःफलंतिकल्पोपपदास्तदेव अध्यूषुषोयामभवन्जनस्ययाःसंपदस्तामनसोप्यभूमिः ५९

संकल्पितार्थानितिकल्पाइत्युपपदंव्यावर्त्तकंयेषांतेकल्पोपपदाःवृक्षाःकल्पवृक्षाः तदेवफलंतिनिष्पादयंति फलनिष्पत्ताविति धातोर्लट् कुतः यांपुरमध्यूषुषोध्यस्यासुषितवतःउपान्वध्याङ्वस इति कर्मत्वंभाषायांसदवसश्रुवइतिक्वसुप्रत्ययःजनस्ययाःसंपदोऽभवन् ताःमनसोप्यभूमिःवाचामभूमिरितिकिमुवक्तव्यमितिभावः गृहेगृहेकल्पवृक्षसंबंधातिशयोक्त्यापौराणांदेवेंद्रभोगोव्यज्यते इहकल्पइत्युपपदंस्वसंज्ञैकदेशोयेषामितिव्याख्यानेहिरण्यपूर्वकशिपुमित्यादिवत् नदोषावकाशः ५९

कलाइति सकलाः समग्राः कलाश्चतुःषष्टिविद्याः षोडशभागांश्चदधानः कलाशिल्पेकलाभेदेंकलातुषोडशोभागइत्युभयत्राप्यमरः सौध यालिसंसौधंतद्वत्सि ताभिः स्वभाभिराशाः दिशउद्भासयन् रेवतीनामनक्षत्रंरेवतीककुद्मिकन्याचजायायस्यसरेवतीजानिः जायायानिङितिसमासांतनिङादेशोलोपोव्योर्वलीतिय लोपः रोहिण्या अपत्यंपुमान् रौहिणेयः बलभद्रः स्त्रीभ्योढक् यांपुरींहातुंत्यक्तुंनइयेषनेच्छतिस्म लिट् रोहिणीशश्चंद्रश्चहातुंनइयेष अत्ररौहिणेयरोहिणी शयोःपुरउत्कर्षावहत्वेनद्वयोरुपेक्षितत्वाद्विशेष्यस्याश्लिष्टत्वाच्चकेवलप्रकृतविषयातुल्ययोगिता ६० बाणेति यत्रपुरि बाणाहवे बाणासुरयुद्धेव्याहतास्खलनीता

कलादधानः सकलाः स्वभाभिरुद्भासयन्सौधसिताभिराशाः यांरेवतीजानिरियेषहातुंनरौहिणेयोनचरोहिणीशः ६०
बाणाहवव्याहतशंभुशक्तेरासत्तिमासाद्यजनार्दनस्य शरीरिणाजेतृशरेणयत्रनिःशंकमूषेमकरध्वजेन ६१

शंभुशक्तिर्येनतस्यहरविजयिनोजनार्दनस्य कृष्णस्यासत्तिंप्रत्यासत्तिमासाद्यपुत्रत्वंप्राप्येत्यर्थः शरीरिणाविग्रहवता नत्वनंगेनेतिभावः जेतारएवजेत्राः जयनशीलाः तृजंतात्प्रज्ञादित्वादण् प्रत्ययः तेशराः यस्यतेनमकरध्वजेनकामेन प्रद्युम्नरूपेणेतिभावः निःशंकंनिर्भीकमूषेऽउषितं वसनिवासेभावेलिट् वचि स्वपीत्यादिनासंप्रसारणं शंकापितर्कभययोरितिविश्वः अत्रशंभुशक्तिव्याघातपदार्थस्यविशेषणगत्यानिःशंकनिवासहेतुत्वोक्त्याकाव्यलिंगभेदः पुराकिलभग वान्भक्तवत्सलोधूर्जटिर्बाणप्रेम्णाबाणाभियोगिनंहरिमभियुज्यनिर्जितइतिपौराणिकाः कथयंति ६१ ७ ७ ७.

निषेव्यमाणेनेति शिवैः मरुद्भिः मंदमारुतैरन्यत्र शिवैरुद्रैर्मरुद्भिर्मरुद्गणैश्च निषेव्यमाणेन हरिणा श्रीकृष्णेन शक्रेण च चिराय अध्यास्यमाना अधिष्ठीयमाना उ
द्रश्मिनां रत्नांकुराणां धाम्नि स्थाने एकत्र रत्नांकुरवत्त्वादन्यत्र रत्नसानुमत्त्वाच्चेति भावः सिंधौ स्थितेति शेषः या पूर्वं मेरौ स्थिता अमरा अस्यां संतीति अमरावतीमिंद्रनग
रीं मतौ बह्वचोनजिरादीनामिति दीर्घः संज्ञायामिति वत्वं आव्हास्त स्पर्धया आहूतवती अमरावतीं चकारे स्पर्धः ह्वयतेर्लुङ् स्पर्धायामाङ इत्यात्मनेपदं
लिपिसिचिह्वश्च आत्मनेपदेष्वन्यतरस्यामिति च्लेरङ् भावपक्षे सिजादेशः अत्र प्रथमार्धे श्लेषे पि मेरौ स्थितेति बिंबप्रतिबिंबभावेन साधर्म्योक्तेः श्लेषानुप्राणि

निषेव्यमाणेन शिवैर्मरुद्भिरध्यास्यमाना हरिणा चिराय उद्रश्मिरत्नांकुरधाम्नि सिंधावाव्हास्त मेरावमरावतीं या ६२
स्निग्धांजनश्यामरुचिः सुवृत्तो वध्वा इवाध्वंसितवर्णकांतेः विशेषको वा विशिशेष यस्याः श्रियं त्रिलोकी तिलकः स एव ६३

तेयमुपमेति संक्षेपः आव्हास्तेति सादृश्यप्रतिपादकशब्दः स्पर्धत आव्हयति द्रुह्यति द्वेष्टि इति तु शासनादिति ६२ स्निग्धेति स्निग्धं यदंजनं तद्वत् तेन च श्या
मा रुचिर्यस्य सः सुवृत्तः सद्वृत्तः सुष्ठु वर्तुलश्च त्रयाणां लोकानां समाहारस्त्रिलोकी तद्धितार्थेत्यादिना समासः संख्यापूर्वो द्विगुरिति द्विगुसंज्ञा अकारांतोत्तर
पदो द्विगुस्त्रियां भाष्यत इति स्त्रीत्वं द्विगोरिति ङीप् तस्यां तिलको भूषणभूतः स हरिरेव विशेषको वा तिलक इवेत्यर्थः इव वद्वा यथा शब्दा इत्यनुशासनात्
तमालपत्रतिलकचित्रकाणि विशेषकाः द्वितीयं च तुरीयं च न स्त्रियामित्यमरः अध्वंसितावर्णानां ब्राह्मणादीनां कांतिः सौजन्यं यस्यास्तस्याः पुरः अध्वंसितो व-

र्णोगौरादिः कांतिर्लावण्यंचयस्यास्तस्याः वर्णोद्विजादौशुक्लादाविस्तुभयत्राप्यमरः वध्वाइवश्रियंविशिष्टोषविशेषितवान् अनेकेवशाब्देयस्तुपमेस्लेके शब्दमात्रसाद्दृ
श्यात् श्लेषोपमेइत्याह दंडी ६३ तामिति अतुलप्रतापः सहरिः तांपूर्वोक्तांपुरीम् ईक्षमाणः पुरस्तात्पूर्वस्यांदिशि ससम्यर्थेतातिप्रत्ययः प्रतोलीं रथ्यां रथ्या
प्रतोलीविशिखेत्यमरः प्रापत्प्राप्तवान् लुङि पूषादित्वादिनाच्लेरङादेशः वज्राणांतोरणप्रासादाद्यधिगतहीरकादिमणीनांप्रभाभिरुद्भासिनी स्फुरायुधश्रीरिं

तामीक्षमाणः सपुरंपुरस्तात्प्रापत्प्रतोलीमतुलप्रतापः वज्रप्रभोद्भासिसुरायुधश्रीर्यादेवसेनेवपरैरलंघ्या ६४
प्रजाइवांगादरविंदनाभेःशंभोर्जटाजूटतटादिवापः सुखादिवाथश्रुतयोविधातुःपुरान्निरीयुर्मधुजिध्वजिन्यः ६५

द्रचापलक्ष्मीर्यस्यांसा इहवज्रग्रहणंमणिमात्रोपलक्षणं अन्यथाइंद्रायुधसाम्यासंभवात् अन्यत्रवज्रस्य कुलिशस्यप्रभाभिरुद्भासिनीस्फुरायुधानामित
रदेवतायुधानांश्रीः यस्यांसा वज्रोस्त्रीहीरकेपवावित्यमरः याप्रतोली देवसेनेवस्फुरत्त्वसूरिव परैःशत्रुभिरलंघ्यादुर्धर्षा ६४ प्रजाइति अरविंदनाभेर्वि
ष्णोरंगात्प्रजाइव यतोवाइमानिभूतानिजायंत इतिश्रुतेरितिभावः शंभोर्जटाजूटतटादापइवगंगाजलानीवविधातुर्मुखात् श्रुतयइवमधुरजितोहरेः
ध्वजिन्यः सेनाः पुरान्निरीयुर्निर्गताः मालोपमेयं ६५

श्लिष्यद्भिरिति अन्योन्येषांसुखाग्रेषु संगस्तेनस्खलंतः खलीनाः कविकायस्मिन्कर्मणि तद्यथा कविकातुखलीनोस्त्रीत्यमरः श्लिष्यद्भिः संश्लिष्यद्भिः विलोलैश्चलद्भिर्हरिभिस्तुरंगैः करणैः अश्वान्वारयंतीति अश्ववाराः अश्वारोहाः परस्परेणोत्पीडितजानुभागाः संतोदुःखेननिश्चक्रमुः निर्जग्मुः इतिस्वभावातिशयोक्त्योः संकरः ६६ निरंतरालइति तमसातिमिरेणेवमाणभृतांगणेनमाणिवर्गेणकर्त्रीनिरंतरालेपिपूर्वंस्वेनैवातिसंकटेपिपथिसंप्रति दूरंदूरतएवविमुच्यमानेसति एकत्रदीपभयात् अन्यत्रद्विपभयाच्चेत्यर्थः तेजोमहद्भिर्बलाधिकैः प्रभासंपन्नैश्च तेजोबलंप्रभातेजइतिशाश्वतः द्विपैदी

श्लिष्यद्भिरन्योन्यमुखाग्रसंगस्खलत्खलीनंहरिभिर्विलोलैः परस्परोत्पीडितजानुभागादुःखेननिश्चक्रमुरश्ववाराः ६६ निरंतरालेपिविमुच्यमानेदूरंपथिमाणभृतांगणेन तेजोमहद्भिस्तमसेवदीपैर्द्विपैरसंबाधमयांबभूवे ६७

पैरिभासंबाधंअसंकीर्णंअयांबभूवेजग्मेनत्वश्वैरिवकृच्छ्रादितिभावः अयगतौभावेलिट् दयायासश्चेत्याम्प्रत्ययः स्वतेजसैवदूरोत्सारिततमस्कैदीपाइवतथो त्सारितप्राणीकेपथिनिरर्गलंद्विपाः प्रयमुरित्यर्थः तमसीतिसप्तम्यंतेपाठेतुतमसः पथ्युपमानत्वेद्विपागमनात् पथइवतमसोदीपगमनात् प्राकृतप्राणिवर्गेणनिरंतरा लत्वंपश्चाद्विमुच्यमानत्वंचनसंभवतीत्युपमानोपमेययोर्वैरूप्यंस्यात् तृतीयांतपाठेतमसः प्राणिवर्गोपमात्वेनतत्सारूप्यसाकल्यात्सएवसाधीयानित्यालंकारिकाणांपंथाः ६७

शनैरिति रथास्सततंतोधावंतो रथाः सयत्नैः सूतैः सारथिभिः सूतोयंताच सारथिरित्यमरः आयताः आकृष्टायेरश्मयः प्रग्रहाः किरणप्रग्रहौरश्मीइत्यमरः
तैर्भुग्नेषुप्रह्वेषु ग्रीवाणांअग्रेषु कंधंतेषु संसक्ताः युगाः स्कंधबाह्याः दारुविशेषायेषांतैः अतएवाखेदैरश्रमैरस्तुरंगैर्हस्तिनखात् हस्तिनखः पूर्द्वारि मृत्कूटः
कूटंपूर्द्वारियद्धस्तिनखस्तस्मिन्नित्यमरः तस्मात् शनैः क्षितिमनीयंतनीताः इतिस्वभावोक्तिः यथावद्वस्तुवर्णनात् ६८ बलोर्मिभिरिति बलान्यूर्मयइवतैर्बलोर्मि

शनैरनीयंतरयात्सततंतोरथाः क्षितिंहस्तिनखादखेदैः सयत्नसूतायतरश्मिभुग्नग्रीवाग्रसंसक्तयुगैस्तुरंगैः ६८
बलोर्मिभिस्तत्क्षणहीयमानरथ्याभुजायावलयैरिवास्याः प्रायेणनिष्क्रामतिचक्रपाणौनेष्टंपुरोद्वारवतीत्वमासीत् ६९

भिः वलयैः कंकणैरिवतत्क्षणे हरिनिष्क्रमणक्षणएवहीयमाना परिस्रुच्यमानारथ्याभुजाइवयस्यास्तस्याः अत्राबंतोभुजाशब्दः अतएवास्याः पुरः द्वारवत्याः चक्रपाणौ
कृष्णेनिष्क्रामतिसतिनिर्गच्छतिसतिप्रायेणभूम्नाद्वारवतीत्वंद्वारकात्वं स्वस्वरूपमितियावत् तदिष्टं नासीत् हरिविरहे नष्टेफल्यादितिभावः द्वारवतीशब्दस्यसंज्ञा
त्वात् त्वतलोर्गुणवचनस्येतिनपुंवद्भावः अन्यत्रद्वारवती त्वंद्वारवत्त्वंनेष्टं तस्यहरिनिष्क्रमणहेतुत्वादित्युभयथाप्युपमितभुजवलयगलनहेतुत्वादुपमासंकीर्णे
यमनिष्टत्वोत्प्रेक्षाप्रायेणेत्यनेनव्यज्यते ६९

अथसर्गसमाप्तेः समुद्रं वर्णयति पारइति मुरारिर्नीरनिधेः समुद्रस्यजलानांपारे परतीरे पारेजलं पारेवारेपरार्वाचितीरेइत्यमरः पारेमध्येषष्ट्यावेत्यव्ययी
भावः तत्संयोगादेकारांतत्वंचपारेशब्दस्य आसमंतान्नीलाः पलाशानांपत्राणांराशयोयासांताः हरितवर्णपर्णपूर्णाइत्यर्थः पत्रंपलाशंछदनमित्यमरः अ
तएवउत्कलिकाऊर्मयः ऊर्मिरुत्कलिकोल्लोलकल्लोलोलहरिस्तथेतिहलायुधः तासांसहस्रैः प्रतिक्षणमुत्कूलिताः कूलमुपहताः कूलंप्रापिताइत्यर्थः उत्कूलशब्दा
त्तत्करोतेर्ण्यंतात्कर्मणिक्तः तेषांशैवलानांआभेवाऽऽभायासांताः तत्सदृशीरित्यर्थः वनावलीरपश्यत् अत्रोत्कूलितशैवलस्यस्वतः सिद्धस्यसंदेहादुप

पारेजलंनीरनिधेरपश्यन्मुरारिरानीलपलाशराशीः वनावलीरुत्कलिकासहस्रप्रतिक्षणोत्कूलितशैवलाभाः ७०
लक्ष्मीभृतोंऽभोधितटाधिवासान्द्रुमानसौनीरदनीलभासः लतावधूसंप्रयुजोऽधिवेलंबहूकृतान्स्वानिवपश्यतिस्म ७१

मोत्प्रेक्षयोः संदेहसंकरः ७० लक्ष्मीभृतइति असौहरिः लक्ष्मींशोभांश्रियंदेवींचबिभ्रतीतिलक्ष्मीभृतः तान् अंभोधितटे अधिवासोयेषांतान् नीरदवन्नीलभासः
नीलवर्णास्तान् लताः वध्वइवेत्युपमितसमासः अन्यत्रलताइववध्वइतिशाकपार्थिवादित्वान्मध्यमपदलोपी ताभिःसंप्रयुज्यंतइतिसंप्रयुजः संगतान् क्विप् अ
धिवेलंवेलायांवेलायांइत्यधिवेलंविभक्त्यर्थेऽव्ययीभावः द्रुमान्बहूकृतानेनेकीकृतान्स्वान् स्वकीयविग्रहानिवेत्यर्थः एवंचपुल्लिंगतायानिर्वाहः आत्मपरत्वेन
पुंस्त्वं ऊ(?)लापातात् स्वोज्ञातावात्मनि स्वंत्रिष्वात्मीयेस्वोस्त्रियांधनइत्यमरः पश्यतिस्म श्लेषसंकीर्णेयमुत्प्रेक्षा ७१ ७ ७

आश्लिष्टेति आश्लिष्टभूमिमालिंगितभूतलं उच्चैः उच्चैस्तरां रसितारं क्रंदितारं लोलतां चंचलतां इतस्ततः पततां भुजानामाकार इवाकारो येषां ते बृहत्तरंगा यस्य तं तथोक्तं फेनायमानं फेनमुद्वमंतं फेनाच्चेति वक्तव्यमिति क्यङि ङित्वादात्मनेपदं अपां समूहः आपं तस्य समूह इत्यण्प्रत्ययः तेन गच्छंतीत्यापगाः तासां पतिं समुद्रं असौ हरिरपस्मारिणं अपस्मारिरोगिणमाशशंके तत्कर्मयोगात्तथोत्प्रेक्षांचक्रे इत्यर्थः यथाहुर्वैद्यनिकाः क्रुद्धैर्धातुभिराहते यमनसि प्राणीमनः संदृशन् दंतान् खादति फेनमुद्गिरति दोषादोक्षिपन् मूढधीः पश्यन्रूपमसौ क्षितौ निपतति प्रायः करोति क्रिया विभ्यस्त्वाः स्वयमेव शाम्यति गते वेगेऽत्यपस्मारवान्

आश्लिष्टभूमिं रसितारमुच्चैर्लोलद्भुजाकारबृहत्तरंगं फेनायमानं पतिमापगानामसावपस्मारिणमाशशंके ७२

पीता जलानां निधिनातिगाध्याद्वृद्धिं गतेऽप्यात्मनि नैव मांतीः क्षिप्ता इवेंदोः स रुचोऽधितीरं मुक्तावलीराकलयांचकार ७३

कू ७२ पीतेति जलानां निधिना समुद्रेण गर्द्ध एव गाध्यं औपम्यादिवत् चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ्प्रत्ययः तदति मात्रमतिगाध्यं तस्मात् तृष्णाभरादित्यर्थः गृध्नोर्भावे ष्यञ्प्रत्यये कृते गुणे गार्ध्यमिति स्यात् पीतात्क्षेपणक्रियापेक्षया पूर्वकालता अथ वृद्धिं गते आत्मनि स्वदेहे चंद्रोदये समुद्रवृद्धिरित्यागमः नैव मांतीः अतिरिच्यमाना इत्यर्थः माते: शतरि ङीप् आच्छीनद्योर्नुम् क्षिप्ताः उद्गीर्णाः अतितृष्णया उत्कंठया पीत्वा अंतरमानात् बहिरुत्सृताइत्यर्थः इंदोः रुचो मरीचय इवेत्युत्प्रेक्षा स हरिरधितीरं अधिवेलं वेलाकूलविकारयोरिति विश्वः मुक्तावलीराकलयांचकार आकलयामास कलतिः कलगतिसंख्यानयोरिति कामधेनुः ७३

साटोपमिति अमीमेघाः साटोपंससंभ्रमं संभ्रमाटोपसंरंभाइतियादवः अनिशंनदंतोगर्जंतोयेरंभोभिः उर्वीसमंततः प्लावयिष्यंति तानिअंभांसिप
योधेरेकदेशादेककोणान्निभृतंनिश्चलंयथातथापिबतोमेघान्सहरिर्ददर्श एतेनससमुद्रस्यापरिछिन्नरूपत्वंव्यज्यते ७४ उद्धृत्येति मुनींद्रैस्ततोवेदादर्थं वे
दार्थमिवमेधेस्ततोंबुराशेरेवतोयमुद्धृत्यसंप्रणीताः कृताः अंबुराशिंपतंतीः प्रविशतीर्नदीः वेदंस्मृतीर्मन्वादिसंहिताइवहरिरालोकयामास श्रुतिमूलत्वेनप्रा
माण्यात्स्मृतीनांतत्संवाद एवतत्प्रवेशः अनेकेवोपमा ७५ विक्रीयेति दिक्कृभवानिदिश्यानिदिगंतरादानीतानीत्यर्थः दिगादिभ्योयत् उरूणिमहांतिध

साटोपमुर्वीमनिशंनदंतोयैःप्लावयिष्यंतिसमंततोऽमी तान्येकदेशान्निभृतंपयोधेःसोंऽभांसिमेघान्पिबतोददर्श ७४
उद्धृत्यमेधैस्ततएवतोयमर्थंमुनींद्रैरिवसंप्रणीताः आलोकयामासहरिःपतंतीर्नदीःस्मृतीर्वेदमिवांबुराशिम् ७५
विक्रीयदिश्यानिधनान्युरूणिद्वैप्यानसावुत्तमलाभभाजः तरीषुतत्रत्यमफल्गुभांडंसांयात्रिकानावपतोभ्यनंदत् ७६

नानिनानाद्रव्याणिविक्रीयमूल्येनदत्त्वा उत्तमलाभंमूलात्द्विगुण्यादिकंभजंतीत्युत्तमलाभभाजस्तान् तत्रत्यंद्वैप्यं आवयात्यप् अफल्गुसारवत् फल्गु
तुच्छमसारंचेतियादवः भांडंमूलधनंपण्यद्रव्यमित्यर्थः वणिक्मूलधनेपात्रेभांडंभूषाश्वभूषयोरितिवैजयंती तरीषुनौषु स्त्रियांनौस्तरणिस्तरीरित्य
मरः अविरतृस्तृतंत्रीरित्यौणादिकईकारप्रत्ययः आवपतःआदधतः तानप्रतः शकुनभूतानवलोक्यतुतोषेत्यर्थः वपतेः शतृप्रत्ययः द्वैप्यान्समुद्रद्वीपवासिनः

द्वीपादन्तु समुद्रं यान्ति नियन्ति प्रत्ययः संयात्रा संभूय यात्रा सा प्रयोजनमेषां तान् सांयात्रिकान् पोतवणिजः सांयात्रिकः पोतवणिगित्यमरः प्रयोजन
मितिठक् असौ हरिरभ्यनंदत् ७६ उत्सिसृवइति नदभर्तुः समुद्रस्यांतरभ्यंतरात् उत्सिसृवः उत्सर्तुमिच्छवः पततेः सन्नंताडुप्रत्ययः सनिमिमेत्यादिनाइय
देशः अत्रलोपोभ्यासस्येत्यभ्यासलोपः फणींद्राः भक्त्या गरुडध्वजस्य हरेर्ध्वजानि वगरीयसानि महन्तानि श्वसितानिलेन पयांस्युच्चैरुच्चिक्षिपिरे

उत्सिसृवोंतर्नदभर्तुरुच्चैर्गरीयसानिःश्वसितानिलेन पयांसिभक्त्यागरुडध्वजस्यध्वजानिवोच्चिक्षिपिरेफणींद्राः ७७
तमागतवीक्ष्ययुगांतबंधुमुत्संगशय्याशयमंबुराशिः प्रत्युज्जगामेवगुरुप्रमोदप्रसारितोत्तुंगतरंगबाहुः ७८

उत्सिसृवंतःउत्प्रेक्षा स्वरितत्वादात्मनेपदं ७७ तमिति अंबुराशिर्युगांतबंधुमापद्बंधुमित्यर्थः उत्संगएवशय्यातस्यांशेतेइतितंतथोक्तं अधिकरणेशेतेइत्य
च्प्रत्ययः आगतमभ्यागतं हरिंवीक्ष्यगुरुणाप्रमोदेन प्रसारिताउत्तुंगास्तरंगा एववाहवो यस्यसः सन् प्रत्युज्जगामेवेतिक्रियास्वरूपोत्प्रेक्षा ७८ ७

उत्संगेति उत्संगिनः संसर्पिणः कृताः उत्संगिताः तत्करोतेर्ण्यंतात्क्तः उत्संगिताः अंभःकणाः येन शेषाद्विभाषेति कप्प्रत्ययः एलावनानामास्फालनेन संघर्षेणलब्धगंधः एवंशिशिरसुरभिरुदन्वतोनभस्वान्समुद्रवायुः अधिवेलंवेलायांविभक्त्यर्थेव्ययीभावः व्रजतस्तस्यहरेःस्वेदलवान् अनुवेलंप्रतिक्षणं यथार्थेव्ययीभावः ममार्ज्जजहारवेलाकूलेचजलधेर्वेलातीरविकारयोरितिविश्वः काव्यलिंगं ७९ उत्तालेति चमूषुचरंतीतिचमूचराः सैनिकाः चरेष्टजितिटच् प्रत्ययः तैरुत्तालेषुउन्नतेषुतालीवनेषुसंभवत्तेनसमीरेणप्रसृतेनमारुतेनसीमंतिताः सीमंतवत्यःकृताः सीमंतशब्दान्मत्वर्थाजंता

उत्संगितांभःकणकोनभस्वानुदन्वतःस्वेदलवान्ममार्ज्ज तस्यानुवेलंव्रजतोधिवेलमेलावनास्फालनलब्धगंधः ७९
उत्तालतालीवनसंभवत्तसमीरसीमंतितकेतकीकाः आसेदिरेलावणसैंधवीनांचमूचरैःकच्छभुवांप्रदेशाः ८०

तत्करोतेर्ण्यंतात्कर्मणिक्तः णाविष्टवद्भावेतिसस्यलुक् ताःकेतक्योयेषुतेतथोक्ताः नद्यृतश्चेतिकप्प्रत्ययः लवणसिंधोरिमालावणसैंधव्यः तस्येदमित्यण्प्रत्ययः हृद्भगसिंध्वंतेपूर्वपदस्यचेतिउभयपदवृद्धिः तासांकच्छभुवामनूपभूमीनां जलप्रायमनूपंस्यात् पुंसिकच्छस्तथाविधइत्यमरः प्रदेशादेशाआसेदिरेप्राप्ताः सीदतेःकर्मणिलिट् अत्रस्वभावोक्तिरनुप्रासश्चालंकारौ अत्रश्लेषसौशब्दसौकुमार्याद्यनेकगुणसंपत्तिःस्पष्टा ८० ७

७ ७ ७ ७ ७ ७ ७

सा·टी· लवंगेति लवंगमालाभिः लवंगकुसुममाल्यैः कलितावतंसाःकृतभूषणाः नालिकेरांतरित्यव्ययं नालिकेराभ्यंतरइत्यर्थः अपइति पृथक्पदं समासेऽऋक्पूरि
२१ त्यादिनासमासांतप्रसंगात् पिबंतः आस्वादिताः भक्षिताः आर्द्रक्रमुकाः आर्द्रपूगीफलानियैस्ते घोंटातुपूगःक्रमुकइत्यमरः तेचमूचराः ससुद्रादभ्या स·
३

लवंगमालाकलितावतंसास्तेनालिकेरांतरपः पिबंतः आस्वादितार्द्रक्रमुकाः समुद्रादभ्यागतस्याप्रतिपत्तिमापुः ८१

गतस्य अतिथेः प्रतिपत्तिंगौरवंसत्कारमापुः प्रतिपत्तिः पदप्राप्तौप्रवृत्तौगौरवेपिचेतिविश्वः अत्राभ्यागतप्रतिपत्तिप्राप्तेर्विशेषणगत्यावतंसकलनादिपदार्थहे २१
तुत्वात् काव्यलिंगमलंकारः तेनसमुद्रस्यचमूचराणांगृहस्थाभ्यागतोपम्यप्रतीतेरलंकारेणालंकारध्वनिः ८१ ७ ७

तुरगेति परितः तुरगशतैराकुलस्य अपरिमिताश्वस्येत्यर्थः प्रतिपथंप्रतिमार्गं यथार्थेव्ययीभावसमासः प्रमथिताःक्षुण्णाः भूभृतोराजानोगिरयश्चयेनतस्य नतु केनापिमथितस्येतिभावः सततंधृतश्रियः पुरोग्रेनगराद्बहिः परिचलतः परिगछतःबलोरामस्तदनुजस्यहरेर्बलस्यसैन्यस्य बलंसैन्येबलोरामइत्यमरःयच्चापिशा श्वतः अथपरंकेवलंएकस्यैवतुरंगस्यजन्मजन्ममात्रंयस्मात्तस्यैकतुरंगजन्मनः एकोपिजातोनत्वस्तीतिभावः महीभृतामंदराद्रिणाराज्ञाचभृशंमथितस्यन तुस्वयंकस्यापिप्रमथिता चिरविगतश्रियः उत्सत्स्यनंतरमेवास्याहरिस्वीकरणादितिभावः जलनिधेश्चतदाप्रस्थानसमयेमहदंतरंदूरगमनादिव्यवधानंउ

तुरगशताकुलस्यपरितःपरमेकतुरंगजन्मनःप्रमथितभूभृतःप्रतिपथंमथितस्यभृशंमहीभृता परिचरितोबलानुजबल स्यपुरःसततंधृतश्रियश्चिरविगतश्रियःसलिलनिधेश्चतदाभवदंतरंमहत् ८२ इतिश्रीमाघकाव्येतृतीयःसर्गःसमाप्तः ३

त्करीत्यामहत्तारतम्यंचाभवत् अत्रोपमेयस्यहरिबलस्यउपमानाज्जलधेराधिक्यवर्णनाव्द्यतिरेकालंकारः पंचकावलीवृत्तंनजभजजाजकोहरयतिकथिता क्वापिपंचकावलीतिलक्षणात् चरितेतिकेचित् नजभपुरस्कृताजजरारचिताक्वविरुद्धदिकूपतिरितिलक्षणात् धृतश्रिवृत्तंधृतश्रीर्यज्जाज्जौत्रिस्वराइतिलक्ष णात् ८२ इतिश्रीपदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितेमाघव्याख्यानेसर्वंकषाख्येतृतीयःसर्गःसमाप्तिमगम त्॥ ॥ हेंपुस्तकमुंबईंत काशिनाथवासुदेवखांडेकरयांणीं “नीतिप्रकाश” छापखान्यांतछापिलें॥ शके१७९२ आश्वीनवद्य ५म्यांभृगुःसंवत्१९२६

